शङ्खणेन कृतदिव्यमन्दिरे
शातकुम्भकृततोरणाञ्चिते।
शश्वदाश्रितजनैर्विनुतः सन्
श्रीपतिः[1] श्रियमुपैति समग्राम्॥ . १५४

*॥इति श्रीवेङ्कटाद्रौ श्रीनिवासस्य संनिधौ*
*अन्तःप्रदक्षिणद्वितयनिर्माणकथाभिः सह*
*आनन्दनिलयादिगोपुरमण्टप-*
*प्राकारकैङ्कर्यकथा नाम*
*प्रथमोऽध्यायः[2]॥*

1. A,B: श्रीपति
2. Both the MSS add:

श्रीनिवासपरब्रह्मणे नमः।
देवी[1] दृग्विषशैलनाथकरुणासंदोहदुग्धाम्बुधेः[2]
भूत्वाप्याश्रितसंचितार्थविततिर्लक्ष्मीपतेः[3] सेवया ।
तस्याः[4] प्राकृतपद्यकिङ्करकथामाध्वीं वहन्तो[5] दिश-
न्त्वध्यायस्तबका गुणाः सुमनसां श्रोत्रेषु भूषाश्रियम् ॥१५५॥

This verse occurs thrice in this book as 1.155; 4.168 and 6.174 with variants as follows :

1. 1. 155; 4.168: देव-
2. 1.155; 4.168: दृवृष°; 6.174: दृर्वृष°
3. 4.168: भूत्वा स्वाश्रितकल्पितार्थ°
4. तस्या; in all places the *visarga* is often omitted before a labial.
5. 6.174: वशून्तो

## द्वितीयोऽध्यायः

प्रदक्षिणद्वयोर्मध्ये शङ्खणेन यथा[1] कृतम्।
तत्कैङ्कर्यमिह प्रोक्तं श्रीनिवासस्य शासनात्॥

पूर्वं श्रीवेङ्कटेशस्य माहात्म्यस्य कथारसान्।
अनुस्मृत्य प्रयासेन वदाम्यद्य यथाश्रुतम्॥

उक्तातिरिक्तकैङ्कर्यकथासिन्धुपयःकणान्।
संगृह्य चाद्य सानन्दं संग्रहेण कथामिमाम्॥

दासभूतोऽह्यहं वक्ष्ये भक्तिश्रद्धासमन्वितः।
श्रीधरे भक्तिविश्वासाच्छ्रूयन्तां साधवोऽधुना॥

शेषाद्रेर्दक्षिणे भागे योजनद्वितयादधः।
नारायणपुरे पुण्ये तोण्डमान्नामभूपतिः॥

आविर्भूत्वा राजकुले विष्णोर्वाक्यप्रभावतः।
अधिरुह्य च शेषाद्रिमानन्दनिलयान्वितम्॥

प्राकारद्वयसंवीतं[2] गोपुरद्वयशोभितम्।
संनिधिं वीक्ष्य बहुशः प्रणामानाचरन् भुवि॥

महाप्रदक्षिणं कृत्वा स्वामिपुष्करिणीजले।
स्नानं कृत्वाथ विधिवत्तत्तीरतलवासिनम्॥

---

1. A,B: यदा

2. A,B: °वीत

वराहं नमस्कृत्य श्रीनिवासस्य संनिधिम्।
चा सपरिवारस्य नत्वा श्रीभूमिनायकम्॥ ९

ङ्कणेन क्षितिभृता कृतकैङ्कर्यमद्भुतम्।
भूदसौ त्वत्कृपया भूम्यां सम्राडभूदिह॥ १०

 प्रसादाद्यच्छिष्टकैङ्कर्यं मद्भवेदिह[1]।
ास्त्विति श्रिया सार्थमवोचद्भगवान् हरिः॥ ११

नुग्रहवशाद्राजा भक्तिश्रद्धासमन्वितः।
ल्पिभिः संयुतः श्रीमान् बहुद्रव्याणि चार्जयन्॥ १२

हिःप्रदक्षिणं चान्तः ताम्रलोहाद्यलङ्कृतैः।
तरैः फलकाकारैराचितामतिपेशलाम्॥ १३

वारयोग्यामचलामारचय्य श्रियःपतेः।
ुरद्वयमध्यस्थध्वजस्तम्भस्य मण्टपम्॥ १४

लस्थापनवेदीं च सुलभोपायकर्मभिः।
रयित्वा महीपालो ह्यन्तरङ्गोऽभवद्धरेः[2]॥ १५

योपकण्ठे दाक्षिण्यदिग्भागे[3] प्रतिवत्सरम्।
जारोहादिदिवसे बहिःकृत्वा प्रदक्षिणम्॥ १६

न्तः प्रविष्टः श्रीवासो प्रविश्यति न संशयः।
मादुच्चावचैः स्तम्भैः सोपानैरुपशोभितम्॥ १७

---

नद् for महत् to save metre. 2. A,B: °ङ्गो भवेद्धरेः
दाक्षिण्य on analogy

श्रीनिवासस्य सदृशमास्थानं परिकल्प्य च।
तत्पश्चिमस्थले दिव्ये सिक्तमाषादितण्डुलान्॥ १८

विप्रस्त्रियो दृषत्पुत्रैः पेषयिष्यन्ति संघशः।
तदर्थमधुना क्लृप्तमुटजं जनसंमतम्॥ १९

घृतादिरसवर्गाणां संचयोऽत्र भविष्यति।
तस्मात्तैलगुडादीनां कूपाश्च विविधाः कृताः॥ २०

प्रदक्षिणे च तार्क्ष्ये देवनैवेद्यसाधकान्।
सूपतण्डुलमाषादिमरीचिचणकान् बहून्॥ २१

रथकम्बलवस्त्रादिध्वजाश्वान् कलशैः सह।
पूरयिष्यन्ति मनुजा इति शालां विधाय सः॥ २२

वैकुण्ठादागतनदीं नित्यसूरिभिरञ्चिताम्।
विरजां वेदिसहितां नत्वाचम्य प्रदक्षिणम्॥ २३

कृत्वा चोन्मुच्य शल्यानि मनसः किल्बिषाश्रयात्।
ग्रीष्मर्तौ देवदेवस्य उपचारं करिष्यति॥ २४

तदर्थं विरजातीरे मण्टपानां चतुष्टयम्।
ह्लादिन्याः पूर्वदिग्भागे माषापूपमहानसम्॥ २५

यथावद्विपुलं कृत्वा राजा संतुष्टमानसः।
पुरा कश्चिद्रङ्गदासः शूद्रो भागवतोत्तमः॥ २६

वेङ्कटाद्रिं समासाद्य स्वामिपुष्करिणीतटे[1]।
पुष्पोद्यानवनं कृत्वा सुमैरभ्यर्च्य केशवम्॥ २७

---

[1] A,B: °पुष्करणी°

चित्तविभ्रमकार्येण श्रीनिवासस्य शासनात्।
देहं त्यक्त्वा राजकुले जातः श्रीमान् नृपात्मजः॥ २८

जन्मप्रभृतिवैराग्यात् कैङ्कर्ये भक्तिमानभूत्।
इति वृत्तान्तमाकर्ण्य श्रीरङ्गे वैष्णवोत्तमैः॥ २९

यामुनाचार्यविप्रेन्द्रः त्रय्यन्तार्थप्रकाशकः।
भूम्यां वैकुण्ठनाथस्य श्रीनिवासस्य शासनात्॥ ३०

वेङ्कटाद्रिं समासाद्य भक्तिश्रद्धासमन्वितः।
तुलसीपुष्पनिचयं संगृह्याद्रौ श्रियःपतेः॥ ३१

युगान्तरे गुरोवरि रात्र्यां पुष्पाङ्गिसंज्ञिकम्।
प्रतिनित्यमलंकारं कुर्वन्निह वसिष्यति॥ ३२

वेणुगोपालकृष्णस्य पुष्पनिक्षेपसाधकम्।
संनिधिं विरचय्यासौ श्रीनिवासस्य शासनात्॥ ३३

अस्योपकण्ठे कासारे रमा वसति नित्यशः।
जनावतरणार्थाय शिलासोपानपङ्क्तिभिः॥ ३४

युक्तं तं रचयित्वान्तर्बहिर्भित्तिभिरञ्जसा।
संप्रोक्ष्याचमनं कृत्वा पश्चाद्द्रव्याणि चार्जयन्॥ ३५

अमितस्वर्णरजतभारान्[1] क्रीत्वाद्य पार्थिवः।
वसन्तकाले संप्राप्ते नित्यमत्यद्भुतोत्सवे॥ ३६

निशावसाने डोलायां श्रीनिवासं परात्परम्।
श्रीदेवीं भूमिदेवीं च आभिमुख्यं यथा तथा॥ ३७

1. A,B: °रजित°

संसेव्याथ महीपालो ब्रह्मानन्दमवाप्स्यति।
तन्निमित्ते कृते दिव्ये रजतस्वर्णमण्टपे[1]॥ ३८

तत्पूर्वभागे देवस्य पादविक्षेपमण्टपम्।
उन्नतप्रस्तरस्तम्भैः कल्पयित्वा श्रियःपतेः॥ ३९

तस्यान्तिके गोपुरस्य मार्गमध्यस्थलेऽग्रतः।
प्रत्यब्दं श्रीनिवासस्य भाष्यकारस्य चोत्सवे॥ ४०

वैष्णवाः संघशो नित्यं प्रबन्धानां समापनम्।
करिष्यन्ति कलौ चात्र तदर्थं मण्टपः कृतः॥ ४१

इतो दक्षिणदिग्भागे कावेरीद्वयमध्यगः।
कदाचिद्रङ्गनाथोऽपि वेङ्कटाद्रिं गमिष्यति॥ ४२

तस्मै भगवते योग्यं पृथगास्थानमण्टपम्।
गर्भान्तरालसहितं कोशागारं महानसम्॥ ४३

रचित्वा[2] रङ्गनाथेन वासितास्थानमण्टपे।
नवरात्र्युत्सवे प्राप्ते त्र्यब्दानामेकवत्सरे॥ ४४

ध्वजारोहस्यन्दनाभ्यां विना राजा महोत्सवम्।
कुर्वन् प्रतिदिनं चात्र श्रीनिवासं श्रिया सह॥ ४५

प्रावेशयित्वा चास्थाने पुष्पाद्याभरणैर्युतम्।
भक्ष्यभोज्यमधुक्षीरप्रसादान् फलसंचयान्॥ ४६

---

1. A,B: °रजित°
2. for रचयित्वा to save metre

निवेदनं श्रीधरस्य नीराजनमतःपरम्[1]।
कारयित्वार्चकवरैः रात्र्यां दीपावलीर्जनैः॥ ४७

तौर्यत्रिकं श्रावयित्वा शिष्टगोष्ठ्यामहर्निशम्।
गन्धताम्बूलसंयुक्तप्रसादान् परिचारकैः॥ ४८

दापयित्वा द्विजादिभ्यो भक्त्या सर्वत्र पार्थिवः।
उत्सवान्तेष्ववभृथं कारयित्वा श्रियःपतेः॥ ४९

स्वयं चावभृथस्नानं स्वामिपुष्करिणीजले[2]।
श्रीपादरेणुं स्वीकृत्य सम्राडत्र भविष्यति॥ ५०

इति संचिन्त्य मनसा भक्तिश्रद्धासमन्वितः।
तोण्डमान्नामनृपतिर्मण्टपानकरोत् प्रभुः॥ ५१

पश्चाद्वैकुण्ठनाथस्य दीपाराथनसाधकान्।
ग्रामाननेकशो दत्वा चक्रवर्तीति मानितः॥ ५२

उपत्यकायां शेषाद्रेः कापिलं तीर्थमुच्यते।
कलौ युगे चक्रनाम्ना प्रसिद्धिं प्राप्य वर्तते॥ ५३

रथाङ्गतीर्थवैभवाद्विराजते गुहागृहं
गुहामुखे श्रिया समं विहारतत्परो हरिः।
हरेर्गृहाणि मण्टपाश्चकाशिरेऽधुनाप्यहो
फलं मुनीन्द्रवेदितं दशाष्टतीर्थसंक्रमात्॥ ५४

---

1. A.B : नीराजन°
2. A,B: °पुष्करणी°

विष्णोराप्लवनादिकर्मकरणात् प्राग्विष्णुचक्राङ्किते
विष्णोरायतनं विशेषमभितः प्राक्पार्वतीशस्य च।
विष्णोः पञ्चमहायुधाद्विगलिते तीर्थे शठारेर्गृहं
चास्ते भक्तियुताः सदा मुनिवराः मज्जन्त्यहो मानवैः॥ ५५

तत्तीर्थवर्ये वारुण्यदिग्भागे गृहमेधिनः।
नृसिंहस्य गुहाद्वाराद्गत्वा श्रीशैलनायकम्॥ ५६

श्रीनिवासं समाश्रित्य प्रयतोत्फुल्लमानसः।
स्वर्णपुष्पैः प्रतिदिनं पूजां कुर्वन् गतागतः॥ ५७

एकदा स्वर्णपुष्पाग्रे मृत्पुष्पाणि विलोक्य सः।
मत्तोऽधिको भक्तिमान् यः तं वदस्व रमापते॥ ५८

तं पृच्छन्तमनेकशः क्षितिभृतं श्रीश्रीनिवासोऽब्रवीत्
त्वत्तो भक्तिविशेषतः प्रतिदिनं निस्वः स्वकीये गृहे ।
काले भाण्डचयान् सदा विरचयन्नन्ते कुलालाग्रणी-
र्हस्ते लग्नमृदा प्रसूननिचयैः स्वाराधितो ह्यन्वहम्॥ ५९

इतश्चोत्तरदिग्भागे योजनाभ्यन्तरे स्थितः।
कुरुहनंम्बीती[1] ख्यातः[2] कुलालो वर्तते चिरात्॥ ६०

तमन्विष्य प्रसादेन ज्ञानवैराग्यमाप्नुहि।
इति प्रोवाच भगवान् तथास्त्विति समाहितः॥ ६१

चारैर्यत्नशतेनापि द्रष्टुं भागवतोत्तमम्।
न समर्थोऽभवद्राजा विषण्णवदनः सदा॥ ६२

1. A,B: °नम्पीति
2. A,B: विख्यातो

*कैशिकोत्सवम्।*

प्रत्यब्दं वेङ्कटाद्रौ प्रविततभवने कार्त्तिके शुक्लपक्षे
द्वादश्यां रात्रिकाले मुनिवरगदितं कैशिकाख्यं पुराणम्।
विष्णोरास्थानगोष्ठ्यां विविधसुमकृते मण्टपे श्रावयित्वा
तातार्यो विष्णुवस्त्रान्[1] बहुमतिमुषसि प्राप्तवान् वाद्यघोषैः॥ ७५

*धनुर्मासेऽध्ययनोत्सवं त्रिभिः श्लोकैराह[2] ।*

प्रत्यब्दं चापमासे प्रतिदिनमचले श्रीनिवासस्य रात्रौ
गोष्ठ्यां श्रीवैष्णवाः प्राक्सकलमुनिवरप्रोक्तमुक्तिप्रबन्धान्।
संघीभूय प्रपन्नाः प्रथितमणिमये मण्टपे श्रावयित्वा
ब्रह्मानन्दं प्रयान्ति प्रकटितकृपया प्राप्तवैकुण्ठसेवाः॥ ७६

प्रबन्धोपक्रमं प्रार्थितैकादशी–
वासरे कार्मुके मासि शुक्लच्छदे।
वेङ्कटेशाग्रतो वेदपारायणं
चोन्नते मण्टपे वैष्णवाः कुर्वते॥ ७७

पुरा नारदाद्यैः कलौ योगिवर्यैः
स्तुते चापमासेऽथ मुक्कोटिकाले[3]।
दिवा श्रीनिवासस्तदा स्वामितीर्थ–
प्रभावं जनानां हितार्थं श्रुणोति॥ ७८

*तस्मिन्नुत्सवे प्रणयकलहोत्सवं श्लोकद्वयेन वर्णयति।*

---

1. A,B: °वस्त्राद्
2. A,B: श्लोकेनाह
3. मुक्कोटि is a Telugu word

क्रीडायां श्रीनिवासः प्रणयकलहकृत् कोपमुत्पाद्य पत्न्योः
संवादं राजवीथ्यां कनकमणिमयैः कन्दुकैस्ताडचमानः[1]।
धावं धावं त्रिवारं कुपित इव वने संविलीनः प्रियाभ्यां
विश्लेषात् प्रार्थितः सन्नमितकरुणया दोर्भिरालिङ्गितोऽभूत्॥

प्रियाभ्यां संयुक्तः प्रणयकलहस्योत्सवकथां
प्रसिद्धां श्रीशैले प्रथितविभवः श्रीपतिरसौ।
मया श्रुत्वा रात्र्यां मम च बहुमानं यतिवरैः
प्रतोल्यां प्रत्यब्दं प्रकटयति वाद्यस्वनयुतम्॥

*इति श्रीनिवासस्य प्रणयकलहोत्सवकथामुक्त्वा, इदानीं रथसप्तम्यामुत्सवमाह।*

माघशुद्धरथसप्तमतिथ्यां
माधवोऽत्र गरुडादिकयानैः।
मङ्गलं कलयितुं मनुजानां
मन्दमन्दमुपयाति वृषाद्रौ॥

सवितुरुदयकालात् सप्तयानेषु तिष्ठन्
सकलमुनिवराणां सौख्यदः श्रीनिवासः।
सततमहनि रात्रौ सच्चिदानन्दरूपः
स वितरति समग्रां संपदं संश्रितानाम्॥

1. A,B: कन्तुकै°

कल्याणवेङ्कटेशाख्यं कमलागृहमेधिनम्।
श्रीनिवासं श्रिया युक्तं प्रतिष्ठाप्य यथाविधि॥ ८०

जामातुः श्रीनिवासस्य कृपया मण्डलेश्वरः।
चक्रवर्तित्वमासाद्य पालयन्नखिलां महीम्॥ ८१

प्राकारगोपुरवरप्रासादमणिमण्टपान्।
गर्भान्तरालसंयुक्तकोशागाराण्यनेकशः॥ ८२

कल्याणमण्टपं दिव्यं कारयित्वा प्रसन्नधीः।
पश्चिमे राजधान्याश्च हृद्यं पद्मसरोवरम्॥ ८३

श्रीनिवासाय महते कल्पयित्वा महारथम्।
अष्टादश नवीनानि यानानि विविधानि च॥ ८४

वैशाखमासे चित्रायां नवाह्निकमहोत्सवम्।
आरभ्य चान्ते विष्ण्वर्क्षे विष्णोरवभृथोत्सवम्॥ ८५

स्वयं चावभृथस्नानं कृत्वा कैङ्कर्यमद्भुतम्।
श्रीनिवासाय महते दत्वा राज्यश्रियं नृपः॥ ८६

संतुष्टमानसो भूत्वा भक्तिश्रद्धासमन्वितः।
राजधानीमधिवसद्राज्यतन्त्रं विलोकयन्॥ ८७

कल्याणवेङ्कटेशः
कमलासहितः प्रयाणसिद्धोऽभूत्।
तस्य श्वशुरौ च तयो–
र्यौतकभूषासहस्रमुपगृह्य॥ ८८

काञ्चनकलशसहस्रै-
र्वस्तुसहस्रैश्च भूषितस्वान्तम्।
मणिपेटिकासहस्रं
श्यामलनिम्बं विनात्र ददतुस्तौ॥ ८९

महार्हशिबिकां यदा समधिरुह्य पत्न्या समं
पुराणपुरुषः क्वचिद्वृषगिरिं प्रपित्सुर्मुदा।
तदा नृपतिदम्पती तमनुसृत्य गत्वा चिरं
वृषाद्रिशिखरेशतुः करुणया पदं प्रापतुः॥ ९०

श्रीनिवासः श्रिया संयुतो वर्तते
वेङ्कटाद्राविह प्रायशः प्राकृतान्।
मादृशान् रक्षितुं सर्वशक्त्यात्मिकः
संततं भूतले सामगानैर्नुतः॥ ९१

तस्यानुजश्चक्रवर्ती राज्यवैराग्यसंपदा।
भक्तिमाश्रित्य महतीं योगाभ्यासमहर्निशम्॥ ९२

स्वयंकुर्वन् महीपालः शूद्रं भागवतोत्तमम्।
कृपया श्रीनिवासेन पूर्वं यत्र निदर्शितम्॥ ९३

कुलालं सेवितुं यत्नात् सामात्यः सह बान्धवैः।
प्रययौ पादचारेण नम्रितो ज्ञानसंपदा॥ ९४

राजानमनुगच्छन्तः भृत्याः शस्त्रसमन्विताः।
चतुरङ्गबलैः साकमभिगच्छन्ति पार्थिवम्॥ ९५

कुलालस्तं समुद्वीक्ष्य भीत्या दुद्राव कानने।
पृष्ठतोऽनुगतो राजा मा भैषीरिति भाषयन्॥ ९६

तिष्ठ तिष्ठ महाभाग त्वाहं सेवतुमादरात्।
आगतं मां समुद्वीक्ष्य प्रसादं कर्तुमर्हसि॥ ९७

श्रीवेङ्कटेश्वरकृपापरिपूर्णलब्ध-
ज्ञानामृतेन निविडीकृतवाग्झरीभिः।
दासानुदासमधुना करुणाकटाक्षै-
रासिञ्च मां यदि भवान् मम धन्यतासीत्॥ ९८

इति संप्रार्थितं भक्त्या कुलालं सेवितेच्छया।
सेनां विसृज्य नृपतिः समीपं प्राप्य तस्य च॥ ९९

ववन्दे चरणौ गृह्य तस्य वाग्भिरवप्लुतः।
धन्योऽस्म्यनुगृहीतोऽस्मि जन्म मे सफलं गतम्॥ १००

अक्ष्णोर्मे धन्यता चासीदन्तरङ्गं तथाभवत्।
इति ब्रुवन् ततो राजा स्वपुरीं तदनुग्रहात्॥ १०१

प्रविश्य मन्त्रिभिर्युक्तः पुत्रं राज्येऽभिषिच्य सः।
निवृत्ततर्षो वैराग्यादन्ते मोक्षमविन्दत[1]॥ १०२

तस्य पुत्रो राजधान्यां स्थित्वा राज्यमकण्टकम्।
पालयन् श्रीनिवासस्य कृपया भक्तिमानभूत्॥ १०३

कतिचिद्वत्सरेऽतीते पाश्चिमात्यो[2] धराधिपः।
रायभूप इति ख्यातो भक्तिश्रद्धासमन्वितः॥ १०४

जन्मप्रभृति वैराग्याद्वैष्णवानुग्रहात् सदा।
श्रीरङ्गादिमहाक्षेत्रे[3] बृहद्गोपुरसंयुतान्॥ १०५

---

1. A,B: °विन्दत्
2. formed on analogy with दाक्षिणात्यः
3. ungrammatical usage.

देवालयांश्च बहुशो विष्णुबिम्बान्यनेकशः।
स्थलेषु स्थापनं कृत्वा पश्चाद्वैकुण्ठभूधरे॥ १०६

मल्लिकामालतीपुष्पमालाभिः समलंकृतम्।
चम्पकाशोकपुन्नागवकुलैश्च कुरण्टकैः॥ १०७

अनेकमुक्तामणिभिरापादतलमस्तकम्।
अलंकृतमभीक्ष्णं तमादरात् सर्वदेहिनाम्॥ १०८

अक्ष्णोरत्यद्भुतं रूपं दर्शयन्तं पदे पदे।
श्रीनिवासं नमस्कृत्य तत्कृपावशवर्तिभिः॥ १०९

शिल्पिभिः संयुतो राजा कैङ्कर्ये कृतनिश्चयः।
बहुद्रव्याणि संगृह्य स्वस्थानमकरोत्तदा॥ ११०

स्थले राजधानीं बृहद्राजसौधान्
स्थिराश्चन्द्रशालाः दृषद्भिश्चकार।
गिरौ दुर्गमाराच्छिलाभित्तियुक्तां
पुरीमन्ततोऽसौ जलप्रायखेयम्॥ १११

सदा रायभूपः क्वचिद्वेङ्कटाद्रा –
वधस्तादगस्त्यस्य तीर्थे निमज्जन्।
गिरौ नित्यवासं हृदि श्रीनिवासं
मुखे सत्यवाचं प्रकुर्वन्नुवास॥ ११२

महाद्वारपुरोभागे चतुरश्रममण्टपम्[1]।
कांस्यशृङ्खलसंयुक्तडोलापीठं चकार सः॥ ११३

1. A, B: चतुरस्रम for °स्र

तत्पूर्वभागे देवस्य जयस्तम्भान्तिकेऽग्रतः।
रामकार्येऽभिषिक्तस्य वामपादाकृतेर्हरेः॥ ११४

आञ्जनेयस्य निलयमग्रे कृत्वा श्रियःपतेः।
सहस्रस्तम्भसंयुक्तमण्टपं महदद्भुतम्॥ ११५

तन्मध्ये चोन्नतस्थानमण्टपद्वितयं कृतम्।
तत्समीपे गोपुरस्य द्वितयप्रक्रियाचरन्॥ ११६

प्रागादिराजमार्गेषु पुरद्वारप्रकाशकम्।
गोपुरद्वितयं कृत्वा नैऋतीशानदिङ्मुखे॥ ११७

तदाभवन् गोपुराणां चत्वारः पुरदीपकाः।
मोक्षार्थी श्रीनिवासस्य कृपया पर्वतोत्तमे ॥ ११८

भक्त्या चार्थेन कृतवानञ्जनाद्रेः प्रभावतः।
मतत्रययतीनां च मठानाकल्प्य संमतान् ॥ ११९

महाप्रदक्षिणे सम्यक् पार्श्वयोरुपशोभितान्।
अविच्छिन्नान् बहुविधान् निलयान् पार्थिवात्मजः॥ १२०

महाप्रदक्षिणस्थले वृषाद्रिनायकोत्सवे
यतीश्वरस्य चासकृद्दिवानिशं बृहद्युतिः।
प्रबन्धवागुपक्रमं मनीषिबृन्दमध्यगः
करिष्यतीति मण्टपं चकार रायभूपतिः॥ १२१

क्षेत्रेऽस्मिन् विविधान् ग्रामान् भक्त्या वैकुण्ठवासिनः।
प्रीत्यर्थं यतिवर्याणामर्चकानामनेकशः॥ १२२

श्रोत्रियाणामभीष्टानामाचार्याणामतोऽधिकम्[1]।
गृहादिसहितान् ग्रामान् दत्वा श्रीवेङ्कटाचले॥ १२३

प्रीतः पश्चात् पुष्करिण्याः शैथिल्यं वीक्ष्य पार्थिवः।
अन्तःप्रदेशे कासारद्वितयस्य च पूरणम्॥ १२४

बहिरेकप्रकारेण शिलासोपानपङ्क्तिभिः।
सरोवरं दृढतरमारात् कृत्वा श्रियःपतेः॥ १२५

मध्ये तटाकं ग्रीष्मर्तौ प्लवोत्सवमितो भवेत्[2]।
यथोचितं सरोमध्ये षोडशस्तम्भमण्टपम्॥ १२६

सुनायासेन सुकृतादक्ष्णोरत्यद्भुतं कृतम्।
स्वर्णरूषितताम्राणां पात्रैरारोपितं विधोः॥ १२७

ध्वजस्तम्भं चकाराग्रे यानमण्टपमुन्नतम्।
दारुपाषाणरूपं च रथस्य द्वितयं महत्॥ १२८

एतादृशवरिष्ठानि कैङ्कर्याणि प्रकाश्य सः।
कैङ्कर्यपूर्तिं संप्राप्य संतुष्टः श्रीधराज्ञया॥ १२९

घण्टाघोषं निशम्यात्र राजधान्यामहर्निशम्।
सुवर्णमुखरीस्नानं कृत्वा विष्णोश्च दर्शनम्॥ १३०

तीर्थप्रसादं स्वीकुर्वन् भक्त्या विप्राहृतं हरेः।
"उत्सवं श्रीनिवासस्य पर्वतेऽस्मिन् विशेषतः॥ १३१

---

1. A,B: श्रोत्रियानाम°
2. ungrammatical use of verb

ब्रह्मादयः करिष्यन्ति लोकपालैः समागताः"।
इति संचिन्तयन्नत्र सभार्यः साञ्जलिर्नृपः॥ १३२

अद्यापि सेवते चाग्रे लोहबिम्बाकृतिः स्वयम्।
वेङ्कटेशस्य पदयोः कृत्वा चात्मसमर्पणम्॥ १३३

गजेन्द्रमोक्षोत्सवमद्रिवर्ये
कर्तुं हरेर्दक्षिणवीथिपार्श्वे।
कासारवर्यः कलिपूरुषेण
कदा कृतोऽसौ न विभाति योग्यः॥ १३४

सदा पार्थिवेन स्वयं हंसवाह-
श्चिरं प्रार्थितः सन् समं लोकपालैः।
क्षणं तार्क्ष्यकेतोः करिष्यन्निकामं
वृषाद्रौ प्रवेष्टुं मनीषां चकार॥ १३५

॥ब्रह्मोत्सवार्थमष्टदिक्पालादीनामागमनम्॥

ब्रह्मेन्द्रभवदिक्पालाः नारदाद्या महर्षयः।
देवैः सानुचरैः साकमप्सरोभिः समावृताः॥ १३६

यक्षकिंनरगन्धर्वसिद्धविद्याधरैः सह।
वेङ्कटाद्रिं समासाद्य मुख्याभिर्वाग्भिरैडयन्॥ १३७

जय लक्ष्मीपते सर्वलोकेश मधुसूदन।
पोत्रीरूप नमस्तुभ्यं पुरुषोत्तम ते नमः॥ १३८

झषकमठवराहसिंहहंसेष्व-
खिलनृपेषु सुरेषु बाडबेषु।
अवतरति[1] भवान् कृपाविशिष्टः
प्रणतवरप्रद तेऽस्तु वन्दनं नः॥ १३९

भवान् समुद्राच्च विषाणकोटया
भुवं समुद्धृत्य जनान् पुनाति।
क्षीराब्धिवासेऽभिरुचिं निवृत्य
श्रीवेङ्कटाद्रौ स्थितिमातनोति॥ १४०

श्रीवेङ्कटवराहाय विश्वमङ्गलकारिणे।
अनन्तायादिभूताय ब्रह्मणे सततं नमः॥ १४१

ब्रह्मणा चार्थितः पूर्वं भवशक्रादिभिः सह।
वटपत्रशयानस्त्वमर्चारूपधरो भवन्[2]॥ १४२

सरोन्तिके श्रिया सार्थमाविर्भूतो ह्यसि स्थिरम्।
इति पुष्करिणीतीरवासिनं पुरुषोत्तमम्॥ १४३

अर्चारूपधरं विष्णुं स्तुत्वा कृत्वा प्रदक्षिणम्।
तीर्त्वा स्वामिसरस्तीरं गत्वा वैकुण्ठनायकम्॥ १४४

भाष्यकारं यतिवरं क्षितौ मोक्षप्रदायकम्।
कृतप्रणामाः सर्वेऽपि स्तोत्रयामासुरीश्वरम्॥ १४५

1. A,B: °तरसि
2. A,B: भवान्

भवहर संश्रितलोकपाल देव
विबुधवरार्चितपादपद्मकान्ते।
भुविजनमोक्षफलावतीर्ण विष्णो
जय जय माधव पाहि पाहि दीनान्॥ १४६

नमन्ति केचित् कुशलं वदन्ति
पुष्पाणि केचिद्वरचन्दनानि।
फलानि माधुर्ययुतानि केचि-
द्वस्त्राणि सर्वाभरणानि दद्युः॥ १४७

सुपुष्पवृष्टिं हरिमौलिभागे
श्रीपादपद्मे तुलसीदलार्चाम्।
स्तोत्राणि वाग्भिः करपल्लवाभ्यां
कुर्वन्ति केचिच्छिरसा प्रणामान्॥ १४८

इति स्तुत्वा श्रिया युक्तं श्रीनिवासं परात्परम्।
सर्वे प्राञ्जलयो भूत्वा कृत्वा चास्य प्रदक्षिणम्॥ १४९

विज्ञाप्यं किंचिदस्तीह श्रृणुष्व करुणाकर।
अस्मिन् युगे मानावानामपराधाननेकशः॥ १५०

अपनीय दयालुः सन् भवान्[1] दृग्गोचरो भव।
एतत्प्रभृति ते सर्वे भक्तिश्रद्धासमन्विताः॥ १५१

दृग्गोचरं त्वामासाद्य पूजां कृत्वा विशेषतः।
अभीष्टमाप्नुयुर्युष्मदेतं नः प्रार्थितं विभो॥ १५२

---

1. ungrammatical use for त्वम् to save metre

इति संप्रार्थितः सर्वैर्दीनानुग्रहकाङ्क्षया[1]।
भगवानथ सर्वात्मा ब्रह्मादीनां समक्षमे[2]॥ १५३

प्रतिज्ञां मनसा कुर्वन् वक्ष्यमाणप्रकारतः।
श्रीभूनीलाद्युपेतः सन् भक्तानां मोक्षसाधकाम्॥ १५४

काम्भोजकाश्मीरकलिङ्गवङ्ग –
चीनाङ्गनेपालवराटकेभ्यः।
पाञ्चालकाशीकुरुकोसलान्ध्र –
कर्णाटबाह्लीकवराटकेभ्यः[3]॥ १५५

घूर्जरावन्तिदेशाभ्यामायातान् मनुजान् नृपान्।
कृपया रक्षितुं श्रीशः स्वकीयं च विशेषतः॥ १५६

अभीष्टममृतप्रायं ददामीति गिरा नृणाम्।
प्रतिश्रुत्य विलासार्थं तूष्णीमासीच्छ्रियः पतिः॥ १५७

स्वयंभूः श्रीनिवासस्य नवाह्निकमहोत्सवम्।
प्रतिवर्षं प्रोष्ठपद्यां कन्यामासे वृषाचले॥ १५८

वैखानसोक्तविधिना[4] चिकीर्षुर्ब्रह्मवित्तमैः।
स्वसंकल्पप्रकारेण देवादीनां समक्षमे[5]॥ १५९

दिक्पालानां सभामध्ये प्रथमं कमलासनः।
कैङ्कर्यमकरोदस्य श्रीनिवासस्य संनिधौ॥ १६०

---

1. A,B: सर्वे दीना°
2. for समक्षम्
3. वराटक is repeated in the verse.
4. A,B: वैघानसो°
5. for समक्षम्

देवस्य गर्भसदने हरिपार्श्वभागे
दीपद्वयं प्रथमतः कमलोद्भवेन।
सद्यो घृतेन परिपूरितभाजनाभ्यां
युक्तं प्रतिष्ठितमनेन दशासमेतम्॥ १६१

अद्याप्यखण्डद्वितयं प्रकाशं प्राप्य सर्वदा।
प्रभूणामभिमानाच्च वर्धते विष्णुमन्दिरे॥ १६२

अखण्डवृद्धिं भुवि मानवा ये
विष्ण्वालये विष्णुविमानमध्ये।
वृषाचले व्यापकदिव्यदेशे
कुर्वन्ति ते[1] विष्णुपदे वसन्ति॥ १६३

ब्रह्मा स्वयं वज्रमयं किरीटं
चूडामणिं देवपतिः स्वयं हरेः।
धनाधिपः कर्णविभूषणे द्वे
शिवश्च नागाभरणान्यनेकशः॥ १६४

वह्निर्वायुर्नैऋतीशोऽन्तको[2] वा
देवस्याङ्गं भूषणाढ्यं प्रकुर्वन्।
आपादान्तलम्बमानांश्च मुक्ता–
हारान् कण्ठे चार्पयद्वारिनाथः॥ १६५

ध्वजस्तम्भस्य निकटे ब्रह्मणा क्षेत्रपालकः।
रात्र्यां देवालयं गोप्तुं शिलास्तम्भे प्रवेशितः॥ १६६

सर्वदा श्रीनिवासस्य धनाकर्षणकाङ्क्षिणौ।
शङ्खपद्मनिधी चोभौ यन्त्रौ[3] पूरितविग्रहौ॥ १६७

---

1. A,B: ये 2. A,B: °तीशान्तको 3. A,B: यन्त्रा

वितस्तिद्वयमात्रेण महाद्वारे[1] प्रतिष्ठितौ।
तदारभ्य विशेषेण धनार्जनमभूद्धरेः॥ १६८

शुद्धस्वर्णविकाराणि यानानि विविधानि च।
स्वसंकल्पप्रकारेण विधातुं विश्वकर्मणः॥ १६९

निदेशनं तदा कृत्वा पताकोच्छ्रितकर्मणि।
उत्सवारम्भकरणे स्वयंभूस्त्वरितो ह्यभूत्॥ १७०

समुच्छ्रितध्वजाग्राणि वीक्ष्य कौतूहला इमे।
वासवाद्यष्टदिक्पालाः प्राहूताः कृतसंभ्रमाः॥ १७१

स्वकीयवाहनारूढाः गन्तुमैच्छन् वृषाचलम्।
द्रविडेषु महापुण्यं वैकुण्ठादागतं पुरा॥ १७२

कृपया श्रीनिवासस्य नवाह्निकमहोत्सवम्।
आरोहाद्यवरोहान्तं कर्तुं ब्रह्मादिभिः सह॥ १७३

पुत्रमित्रकलत्रादिबन्धुभिः सहिता भृशम्।
अनेकवस्त्राभरणान्याहृत्य निजपट्टणात्॥ १७४

बहिर्निर्गत्य ते सर्वे भक्तिश्रद्धासमन्विताः।
श्रीनिवासं नमस्कर्तुं वृषाचलमुपारुहन्॥ १७५

---

1. A,B: महद्वारे

## ॥ वेङ्कटाचलवनवर्णना[1] ॥

चूतमन्दारपनसकदम्बार्जुनचन्दनैः।
अशोकवकुलैः कुञ्जैः तमालैः समलङ्कृतम्॥ १७६

अश्वत्थप्लवगाङ्कोलमुचुकुन्दैर्विराजितम्।
नक्तमालशिरीषाम्रकिंशुकैश्च विचित्रितम्॥ १७७

मयूरशुकशारिकापरभृतस्वनैर्नादितै-
रनोकहकदम्बकैर्गलितपुष्पगन्धान्वितैः।
फलप्रकरनम्रितैर्मधुकरस्वनाम्रेडितै-
र्गिरिप्रवरनिर्झरैर्मृगगणैः सदा सेवितम्॥ १७८

वने मृगेन्द्रकुञ्जरा गुहागृहे निवासिनो[2]
निवासयोगिभिः समं महागिरेः प्रभावतः।
प्रभावलेशवर्णनादपि श्रियःपतिः परं
परंपरानुमङ्गलं करोतु मोक्षदो नृणाम्॥ १७९

गोलाङ्गूला वानरा वायुवेगाः
वृक्षाद्वृक्षं संप्लवन्तो वनान्ते।
खादं खादं भक्षयन्तः फलाग्रं
स्वादं स्वादं घोषयन्तो मधूनि॥ १८०

शार्दूलभल्लूकतरक्षुखड्गिनो
लुलायभूदारकुरङ्गशावकाः।
परस्परं वैरमपास्य संघशो
दरीषु कुञ्जेषु वसन्ति ते चिरात्॥ १८१

1. A,B: अथ वे°
2. A,B: निवासिनौ

इतश्चरति केशवः कुलमितस्तदीयद्विषा-
मितश्च शरणार्थिनो मुनिगणाश्चरन्त्यद्रिषु।
इतोऽपि मदकुञ्जराः हरिगणैः समं संगताः
मधुग्रहणतत्पराः वनचरास्तरूनाश्रिताः॥ १८२

दावानलादग्धमहीरुहेषु
तृणेषु कुञ्जेषु पयोम्बुवाहः।
ददाति नित्यं मृगशाबकेभ्यः
कासारवर्येषु जलाश्रयेषु॥ १८३

कुञ्जरेषु पृषत्सु दृषत्सु
द्वीपिराजिषु मृगेषु खगेषु।
पन्नगेषु जलजेषु जनिं
प्रागैच्छदत्र कुलशेखरयोगी॥ १८४

एतादृशान्यद्भुतानि चरित्राणि वृषाचले।
विलोकमाना वीथीषु विमानान्तर्गतास्थिताः॥ १८५

रवौ चास्तंगते रात्र्यां विष्णुपूजाविधेः परम्।
डोलोत्सवं च विधिवत् कारयित्वा श्रियःपतेः॥ १८६

कवाटानि पिधायाशु महारजतशृङ्खलैः[1]।
जतुमुद्राविधिं कृत्वा पूजकः स्वगृहं गतः॥ १८७

वैखानसात्मजः[2] कश्चिदर्भको निद्रितः क्वचित्।
देवालयेषु सर्वत्र शोधने क्षेत्रपालकः॥ १८८

स्वपन्तं बालकं दृष्ट्वा क्रोधमासाद्य तक्षणम्।
द्वेधा विभज्य तं बालं विसृजच्चालयाद्बहिः॥ १८९

1. A,B: °रजित°

2. A,B: वैघान°

तस्यां रात्र्यां व्यतीतायां प्रभाते क्षेत्रपालकः।
अत्र स्थातुं न योग्योऽयं हिंसाकार्यप्रवर्तनात्॥ १९०

पुराद्बहिः स्थापितव्यः पाण्डुतीर्थे गुहामुखे।
बृहद्दण्डशिलायां च वेशितः शार्ङ्गपाणिना ॥ १९१

तदारभ्य विशेषेण मनुजान् स्वपुरस्थितान्।
मनुष्यलीलामाश्रित्य हरिरद्यापि रक्षति ॥ १९२

अमितकरुणया निशासु विष्णुः
पुरमभितः परिपालनेच्छया।
सततमतिकृशान् स्वभृत्यवर्गान्
हितवचनं कलयन् शुभं करोति॥ १९३

वृषशैलनायकमणेः कृपया
निवसन्त्यमुत्र नितरां मनुजाः।
स्वसुखं विहाय विषवायुजला-
दतिरोगभीतिमपहायचिरात्॥ १९४

*॥ इति श्रीवेङ्कटाद्रौ महाप्रदक्षिणादिनिर्माण-*
*कथाभिः सह ब्रह्मोत्सवार्थमिन्द्राद्य-*
*ष्टदिक्पालागमनकाले शेषा-*
*चलवर्णनकथा नाम*
*द्वितीयोऽध्यायः॥*

## तृतीयोऽध्यायः[1]

अध्यायद्वितये पूर्वं वेङ्कटाचलवासिनः।
युगान्तरे निर्मितानि कैङ्कर्याणि नृपेश्वरैः॥ १

कृपया श्रीनिवासस्य गोविन्दानुग्रहादिह[2]।
ब्रह्मोत्सवं विना सर्वमुत्सवं च श्रियःपतेः॥ २

शुश्रुवुः किल माहात्म्यं श्रद्धाभक्तिसमन्विताः।
पूर्वं युगान्तरे विष्णोः ब्रह्मणा कल्पितोत्सवम् ॥ ३

अस्मिन्नगोत्तमे पूर्वमिन्द्रशापविमोचनम्।
रामलक्ष्मणयोरत्र वासं वानरयूथपैः॥ ४

वैकुण्ठाख्यगुहास्थाने वेङ्कटेशस्य दर्शनम्।
षट्षष्टिकोटितीर्थेषु मुख्यान्यष्ट सरांसि च॥ ५

तेषां नामानि पुण्यानि स्नानकालं विशेषतः।
तेषु स्नानफलं नृणां तत्तद्दानविधिक्रमम्॥ ६

वाल्मीकिऋषिमुख्यानामशेषाणां[3] स्थितिक्रमम्।
पाण्डुपुत्रनिवासं च तेषां स्वप्नं तपोबलात् ॥ ७

हलायुधस्य यात्रायाः पूर्तिकारणवैभवम्।
युगेऽस्मिन् श्रीनिवासस्य चरित्रं मोक्षदायकम् ॥ ८

---

1. A,B add: अस्मद्गुरुभ्यो नमः    2. Incompatible compound for गोविन्दस्यानु°

3. A,B: °करुषि°

श्रीवासोऽपि कृपावशाद्वनतले मानुष्यलीलां वह-
त्याचार्यद्वितयेन[1] कारितकथाः श्रीशेषशैलस्य च।
नामानि श्रुणुतादरादिह सकृत् सभ्याः स्वयं श्रीपतिः
युष्माकं सुमनोरथान् वितरति ज्ञानामृतं प्रायशः॥ ९

## ॥ब्रह्मोत्सववैभवम्॥

प्रावृट्कालदिने प्रशस्तविभवे श्रीवेङ्कटेशोत्सवे
प्राप्ते सिक्थकदूष्यमम्बरतले रथ्यासु नित्यं हरेः।
वृष्टेर्बिन्दुनिवारणार्थमचिरात् प्राक्कारयित्वाऽधिकृत्
त्वष्टॄन् तद्वहने निदेशमकरोत् कार्ये शताङ्गस्य च॥ १०

रथ्यासु रम्यभवनेषु जनाकुलेषु
पूर्णासु पुण्यसरसीषु जलप्रवाहैः।
पण्येषु सौधगृहचत्वरपूरितेषु
देवालयेषु सुधया कलितेषु सत्सु॥ ११

उत्सवदिवसात् पूर्वं
ब्रह्माध्यक्षाः विविच्य वस्तुचयान्।
घनसारगन्धतैला-
नभिषेकार्थं वृषाचलेशस्य॥ १२

सिततण्डुलसूपशर्करा-
गुडमाषाम्लमरीचिजीरकाश्च।
हरिमन्थकमुद्गसर्षपान्
यवगोधूमवलक्षराजमाषान्॥ १३

1. A,B: वहन्नाचा॰ येऽत्र

कदलीफलसारबीजपूगान्
क्रमुकानष्टदलानि नारिकेलान्।
कतमान् पनसान् फलप्रकर्षान्
कमलाकामयितुर्निवेदनाय॥ १४

नवकङ्कणवस्त्रभूषणानि
नवरत्नान्वितहारकुण्डलानि।
नवमौक्तिकछत्रचामराणि
नवकौशेयवितानमण्टपानि॥ १५

नवगन्धसमेतपङ्कजानि
नवरात्र्युत्सवदेवभूषणानि।
नवकल्पितवाद्यमण्डलानि
नवतूर्यान्वितशङ्खकाहलानि॥ १६

गजवाजिमहोक्षवाद्यसंघान्
गगने नर्तितचित्रबाणजालान्।
गरुडध्वजवस्त्ररश्मिसंघान्
गरुडाद्रौ सकलान् समाह्वयन्ति॥ १७

अगरूनमलांश्च वृक्षधूपा-
नपि कर्पूरसमानतैलभाण्डान्।
अपरान् मधुसर्पिभिः समेता-
ननुसंपादयति प्रशस्ततैलान्॥ १८

भूलोकवस्तुनिचयान्
सर्वान् संपाद्य संमतान् विष्णोः।
उत्सवविभवं कर्तुं
प्रारभन्ते प्रशस्तभव्यदिने॥ १९

ब्रह्मोत्सवात् पूर्वदिने निशायां
सेनाधिपः शासनदण्डधारी।
श्रीवासभूषाम्बरभूषितः स–
न्नाविर्बभूवाद्रिवरे प्रतोल्याम्॥ २०

ब्रह्मोत्सवादौ श्रितपञ्चपालिकां
श्रीयागशालामपि नित्यसूरिभिः।
समाश्रितामग्निमुखाः सुरादयः
प्रकाशयामासुरिमां पुरीं भृशम्॥ २१

उत्सवदिवसे प्रातः
मणिकृतसौधेषु तोरणान्याशु।
रचयन्ति रङ्गवल्लीं
रमणीरमणाश्च राजवीथीषु॥ २२

श्रियःपतेर्महोत्सवे दिवानिशं महागिरौ
महागिरां प्रवर्तकाः द्विजोत्तमाः समागताः।
गतागतैर्जनैः समं करेणुवन्दिराजयो
जयाशिषं प्रकुर्वते नभोगताः सुरोत्तमाः॥ २३

पृथ्वीषु रङ्गलतया ललितासु सत्सु
धामाङ्गणेषु गजवाजिरथाकुलेषु।
वाद्यस्वनेषु वरगायकगीतवत्सु
विष्णोः पदेषु कमलाञ्चिततोरणेषु॥ २४

श्रीशैले प्रोष्ठपद्यामनुशरदमसौ त्वष्ट्रभे चोत्सवादौ
श्रीभूम्यां रत्नपीठे मणिकृतकवचालङ्कृतः श्रीनिवासः।
रक्षाबन्धं च कृत्वा ध्वजपटसहितं स्थापनं देवतानां
रथ्यायां वाद्यघोषैर्मिलितनुतिरवैर्हर्षितः प्रादुरासीत्॥ २५

मृदङ्गडिण्डिमानकप्रचण्डशङ्खकाहल–
प्रशस्तदुन्दुभिध्वनिर्गुहामुखेष्वहर्निशम्।
प्रतिध्वनिं प्रकल्पयन् प्रविश्य चाष्टलोकपान्
समाह्वयन्निवाबभौ समस्तवेदनिस्वनैः॥ २६

श्रीशैलेऽद्य महोत्सवे क्षिततले नृत्यन्ति वाराङ्गनाः
व्योमस्थाप्सरसां गणैः परिवृताः विद्याधराश्चान्वहम्।
गन्धर्वाश्च जगुः कलं सुमनसो देवा ववर्षुर्मुदा
सिद्धाः किंनरचारणैः परिवृताः संतुष्टुवुः श्रीपतिम्॥ २७

महामेरुसंज्ञं रथं चाश्रयन्तो
विरिञ्च्यादिदेवा विधोरग्रभागे।
प्रभुत्वं विहाय प्रजाभिः समेताः
प्रतोलीषु नित्यं प्रधावन्ति हृष्टाः॥ २८

तत्तद्देशादागता ये धनाढ्याः
श्रीशैलेशस्योत्सवं कर्तुकामाः।
आरुह्याद्रिं स्वेष्टकाम्यार्थसिद्ध्यै
विष्णोरग्रे दत्तमादौ प्रचक्रुः॥ २९

तेषां सर्वैर्लालितानां जनानां
श्रीशाध्यक्षाः स्वर्णवेत्राणि दद्युः।
तैस्तैर्वेत्रैर्भूषितास्ते प्रयान्ति
श्रीशस्याग्रे राजवीथीषु नित्यम्॥ ३०

श्रियःपतिस्त्वहर्निशं प्रकाशते समन्ततः
समन्ततो विराजते क्षपामुखे निशाकरः।
निशाकरे तिरस्कृते त्वहर्मुखे प्रभाकरः[1]
प्रभाकरः पलायते सुदर्शनप्रभावतः॥ ३१

1. A.B.: प्रभाकरो

तद्रात्रिकाले हुतभुक्प्रतिष्ठा-
माज्यैरपूपैर्हविषा च होमम्।
प्राक् कारयित्वाथ बृहत्फणीन्द्र-
यानं समारुह्य बभौ मुरारिः॥ ३२

नित्यं निशासु नितरामहनि प्रशस्त-
यानेषु काञ्चनमयेषु च राजतेषु।
वस्त्रादिभूषणशतैरपि भूषितः सन्
श्रीशः श्रिया सह रराज तदा प्रतोल्याम्॥ ३३

शेषाख्ये पञ्चशीर्षे धवलरुचियुते वाहने श्रीनिवासः
तिष्ठन्नेव प्रजानां मुदमतिकलयन् नित्यमुक्तानुभाव्यः।
कुक्षौ निक्षिप्य लोकान् बहिरपि सुलभं रूपमाश्रित्य हर्षात्
दीनान् वीक्ष्य प्रकामं बहुतरममलान् कर्तुमाविर्बभूव॥ ३४

लोकादानीयमानं मुखगतकमलं स्वर्णहंसं महान्तं
रात्र्यां वैकुण्ठनाथे गतवति सनकाद्यर्चिते श्रीनिवासे।
वृक्षाद्वृक्षं प्लवन्तो शुकपिकशिखिनः शब्दवन्तो यदा सन्
घोषं श्रुत्वापि भृङ्गाः श्रवणसुखकरं गीतमापादयन्ति॥ ३५

मृगेन्द्रवाहनं गतः सकार्मुकः श्रियःपतिः
प्रभूषितः प्रगल्भवाक् प्रचारसूरिभिः समम्।
वनं गतान्निशाचरान् वनाद्वनं प्रधावयन्
वनं प्रविश्य सायकैः समं गतो विराजते॥ ३६

निशामुखे निशाकरे निदाघतप्तभूतलं
निरन्तरं हिमाम्बुभिर्निषिञ्चति स्वयं हरिः।
वितानगुच्छमौक्तिकैर्विराजमानमण्टपं
विभूषयन् प्रतोलिकासु सर्वतः प्रकाशते॥ ३७

क्षणे तुर्यवारे परे श्रीनिवासे
गते कल्पवृक्षं दिवा योगिमध्ये।
सदा दिव्यरूपे नृणां मुक्तिरूपे
सुरा मुक्तिकामाः बभूवुर्वृषाद्रौ॥ ३८

कल्पवृक्षमधिगम्य मुकुन्दः
संदधाति सकलं मनुजेष्टम्।
योगिनाममृतमाशु सुराणा-
मत्यभीष्टमनिशं विदधाति॥ ३९

तस्योद्धर्षे प्रकामं विविधसुमकृतं सर्वभूपाभिधानं
यानं चारुह्य रात्रौ धगधगितमणिद्योतिभिर्द्योतमानैः।
भूषावस्त्रैर्नितान्तं निचितवपुरसौ श्रीनिवासः श्रितानां
क्षेमं कुर्वन् प्रयाति प्रशमिततमसां प्रायशः प्राकृतानाम्॥ ४०

पञ्चमदिवसे प्रातः
वनितारूपं श्रयन् रमानाथः।
आन्दोलिकां गतः स-
न्नाश्रितरिपुमोहमावहन् जयति॥ ४१

रम्यासु राजपदवीषु रमापतिस्तु
माङ्गल्यसूत्रमवधार्य सुपुष्पवेणीम्।
ताटङ्कभूषणमसौ मणिकञ्चुकं च
रामासु राजमहिषीवरमाबभूव॥ ४२

तार्क्ष्यस्थे गरुडध्वजे प्रचलिते रथ्यासु पीताम्बरे
मुक्ताजालसुवर्णदण्डमहितश्वेतातपत्रैर्वृते।
ज्योत्स्नायां ज्वलितप्रदीपनिवहैर्विद्योतमानैर्जनैः
संयुक्ताः पुरतः पितामहमुखाः गच्छन्ति मोक्षार्थिनः॥ ४३

नमन्ति केचिद्गरुडाधिरूढं
स्तुवन्ति चान्ये श्रुतिहृद्यरूपम्।
गायन्ति नामानि यशोङ्कितानि
वहन्ति यानन्यपरे ध्वजानि॥ ४४

रथ्यासु सर्वत्र गृहाङ्गणेषु[1]
स्वपुत्रमित्रैः सहिता मनुष्याः।
नीराजनं[2] नित्यमनन्तमूर्तये
समर्पयन्ति स्म सहस्रशस्तदा॥ ४५

आञ्जनेयभुजमध्यगतः स–
न्नञ्जनाचलपतिः स विभाति।
अर्चितः सुरमुनीश्वरबृन्दै–
रम्बुजाननमहोत्सवकाले[3]॥ ४६

पूर्वं रामावतारे कपिवरविदितां जानकीं प्राप्तुमिच्छन्
लङ्कां गत्वा कदाचिद्रणभुवि धनुषा रावणं जेतुकामः।
सोऽयं श्रीवायुसूनुपृथुतरभुजयोर्मध्यमाश्रित्य युद्धे
वीरस्वर्गं रिपूणां वितरति विदुषां मोक्षमस्मिन् वृषाद्रौ॥ ४७

तस्मिन्नेव दिने वृषाद्रिशिखरे दिव्ये वसन्तोत्सवे
श्रीभूम्यां सहितः श्रियःपतिरसौ श्रीचन्दनालङ्कृतः।
वस्त्रैराभरणैरलङ्कृततनुश्चामोदयन्नाश्रितान्
भास्वत्यस्तगते कलानिधिरिव प्रादुर्भवत्यालयात्॥ ४८

---

1. A,B: गृहाङ्कणेषु
2. A,B: नीराञ्जनं
3. A,B: °जासन°

मणिनूपुरवरभूषणगजयूथपयानं
मणिकल्पितमकुटान्वितचूडामणिकान्तम्।
सुरपूजितमुनिमानितवसुधाधिपवेषं
कमलाश्रितनिजवक्षसि धृतकौस्तुभकान्तम्॥ ४९

समयोचितकुसुमान्वितसुरचम्पकमालं
भुजभूषणकिरणैर्युतवरसायकशार्ङ्गम्।
कमलासननुतिवर्धितकरुणापरिपूर्णं
जडमानससुखतोऽभयपुरुषोत्तममारात्॥ ५०

अरुणोदयकालेऽस्मि-
न्नवनीपतिवेषमाश्रयन् श्रीशः।
यामुनगुरुमाचार्यं
संमान्यागात् तदालयाच्छीघ्रम्॥ ५१

सूर्यप्रभावाहनमाश्रितः सन्
मनुष्यहृत्पद्मविकासमादरात्।
उत्पादयन्नुद्धृतमन्दहास-
विलासमङ्गीकुरुते विराडसौ॥ ५२

सुधांशुवाहनं गतश्चरन् वृषाद्रिनायकः
प्रतोलिकाः समन्ततः प्रकाशयन् स्वतेजसा।
निशामुखे तमच्छटां निराचकार चन्द्रमाः
पुरातनं तमो नृणां पुरणपूरुषस्तथा॥ ५३

शताङ्गं षट्चक्रान्वितममितघण्टाशतयुतं
पमन्तात् पञ्चास्यैः ध्वजपटवितानैः परिवृतम्।
रो गन्धर्वाश्वैरतिभयकरैर्दर्शकवरै-
रलंचक्रे श्रीमान् बहुगुणयुतं भुव्यसदृशम्॥ ५४

श्रीभूनीलासमेतः श्रितसुरविनुतः श्रीनिवासः श्रितानां
क्षेमं कुर्वन्नतीव त्रिदशपरिषदां बृन्दमध्ये रथस्थः।
प्रातःकाले प्रयातुं प्रयतयतिवरैः प्रार्थ्यमानो यदाभू-
द्रथ्यायां चक्रनेमिस्तुतिवरसहितः स्यन्दनश्चञ्चति स्म॥ ५५

तद्रात्रौ रजताश्ववाहनमसौ[1] चारुह्य भृत्यान्वितः
शस्त्रैरन्वितबद्धकच्छकवचैः शिष्यैः समं वर्त्मनि।
दृष्ट्वाग्रेऽप्यकुतोभयं मुनिगणश्रेष्ठं कलिध्वंसिनं
तेनाख्यातसहस्रगीतफणितीरध्याप्य तन्मानितः॥ ५६

श्रीमान् नावमिके दिने सुरसभामध्ये प्रियाभ्यां युतः
मुक्तागुच्छसुवर्णदण्डमहितां क्षौमांशुकालंकृताम्।
पृष्ठेऽग्रेऽपि च सिंहवक्त्रललितां मानुष्यबिम्बैर्धृतां
रम्यां कोणचतुष्टयां मणिकृतामान्दोलिकां प्राविशत्॥ ५७

चूर्णाभिषेकोत्सवमादराद्बुधाः
संसेव्य भक्त्या वनितायुता हरेः।
श्रीचूर्णशेषं शिरसा वहन्ति ये
पुनाति नित्यं पुरुषोत्तमश्च तान्॥ ५८

तदा खलु रमापतिः मुनिपराङ्कुशाद्यैः समं
नदीशतसमाकुले नवसरस्समूहावृते।
सरस्यवभृथोत्सवं सकलयोगिमुक्तिप्रदं
करोति रमया समं कमलजन्मना प्रार्थितः॥ ५९

---

1. A,B: रजिता°

विमानमानन्दगृहाभिधानं
विविश्य रात्रौ वृषशैलनाथः।
विशेषवस्त्राभरणैर्विभूषितः
वीथीषु सर्वत्र विराजते विराट्॥ ६०

तत्पश्चाद्बलिहोमपूर्तिमचिरात् कृत्वा प्रसिद्धार्चकः
ब्रह्मेन्द्रादिविसर्जनं बहुमतिं तेषां ध्वजाग्रात् पटम्।
आनीयास्य पदे समर्प्य विनतीः कृत्वाङ्कुरारोपणं
मन्त्रस्वस्तिकपूर्वकं मणिमये सिंहासने कुर्वीत॥ ६१

वृषाचलपतिक्षणे वृजनमन्वहं[1] क्षालितुं
विशेषमविवेकिनां सदसि यो भवेद्भक्तिमान्।
विपश्यति तमन्वहं विविधवाहनाधिष्ठितो
विनाशितुमरीन् सदा विबुधबृन्दमध्यस्थितः॥ ६२

तदास्थानाद्विष्णुः सह परिकरैर्गर्भसदने
बृहच्छ्रीशोपेते प्रविशति यथा स्थानमचिरात्।
यदा ब्रह्मेन्द्राद्याः स्वपदमविशन् श्रीशकृपया
तदा सर्वे तुष्टाः स्वजनसहिताः स्वान् जनपदान्॥ ६३

श्रीशैले चोत्सवान्ते प्रतिशरदममी वैष्णवा विष्णुभक्ताः
स्वान्तस्थान् वेदसारान् शठरिपुकलितान् द्राविडान् श्रावयित्वा।
रात्र्यां श्रीपुष्पयागं प्रयतयतिवरैरर्चकैः कारयित्वा
पूजां शीतोपचारामसकृदपि तथा चक्रिरे श्रीधरस्य॥ ६४

---

1. A,B: वृजिन°

प्रायः प्रवचनजुष्टाः
श्रीशमुपास्य श्रिया च संदिष्टाः।
अर्चारूपमनन्त-
ममरैः साकं प्रतुष्टुवुः प्राज्ञाः॥ ६५

चराचरात्मको[1] भवान् सुरासुरानुसेवितः
शुभाशुभं सदा नृणां क्षणे क्षणे प्रदर्शयन्।
बुधाबुधैर्जनैः समं धराधरेषु तिष्ठतां
बलाबलं करोति तद्गुणागुणानुसारतः॥ ६६

सवितृमण्डलमध्यगतो भवान्
दनुजमण्डलमद्य विनाशितुम्।
विबुधमण्डलमादरितुं सदा
शिखरिमण्डलमध्यमुपाश्रितः॥ ६७

नवाह्निकमहोत्सवे नवरसान् प्रियाभिर्भवान्
अवाप्य च पृथक्पृथग्जनमनोभिरामान् मुदा।
पितामहमुखोद्गतप्रयतवेदघोषान् यदा
श्रुणोति वरयोगिभिः कलितवेदसारानपि॥ ६८

पूर्वं लीलाविभूत्यामवतरति सति श्रीनिवासे वृषाद्रौ
ब्रह्मेन्द्राद्याः प्रहृष्टाः प्रतिशरदमिमं चोत्सवं श्रीधरस्य।
लोकादागत्य कृत्वा त्वतिशयितपदं यद्यथा प्राविशन् ते
तद्वच्छ्रीशोत्सवं यः सकृदपि कुरुते तत्पदं याति शीघ्रम्॥ ६९

---

1. A,B: °रात्मिको

आनन्दं ययुरवनीशाः
संततगमने वृषाचले विष्णोः।
सेवार्थं प्रणतानां
मोक्षार्थं पुण्यकर्मकरणाच्च॥ ७०

देशादागतपार्थिवाश्च मनुजाः ब्रह्मोत्सवं श्रीपते–
र्नित्यं पुत्रकलत्रबन्धुसहिताः संसेव्य कालद्वये।
मृत्योर्भीतिमपास्य वत्सरशते भुङ्क्त्वातिभोगाः सदा
वैकुण्ठे वसतिं वहन्ति कृपया ते नित्यमुक्तैः समम्॥ ७१

*इति ब्रह्मोत्सवं वर्णयित्वा अनन्तरं दीपावल्यादि–
दिनत्रयोत्सवमाह।*

इषे मासि कृष्णच्छदे भूततिथ्यां
शुभे वत्सरादौ च याम्यायनादौ।
दिवा श्रीनिवासः सभास्थानमध्ये
चमूपेन साकं प्रियाभ्यां समेतः॥ ७२

स्वर्णसिंहासने रत्नभूषाशतै –
र्योगिनां मोक्षकृद्दर्शनं प्राणिनाम्।
संददात्यक्षतान् भक्ष्यमन्नादिकं
चायुषां संपदं वासरेषु त्रिषु॥ ७३

*अथ कार्त्तिकमहोत्सवं श्रीशैले श्रीपुर्यां च वर्णयति।*

श्रीशैले श्रीनिवासः कलयति निलये कार्त्तिके पूर्णिमायां
रात्र्यां दीपावलीभिस्तपन इव लसन्मर्त्यहृत्पद्मतोषम्।
श्रीपुर्यां गोपविष्णुः शठरिपुसदने शासनं वाचयित्वा
तस्मै वस्त्रादिमालां दिशति मुनिवरैः साकमाचार्यगोष्ठ्याम्॥ ७४

वेङ्कटाद्रिं समासाद्य लज्जयापहृतस्मृतिः।
अवर्तिष्ट च तत्रैव राज्यतन्त्रं विहाय सः॥ ६३

राज्यं कदाचित् सामन्तैराक्रान्तमभवद्यदा।
एतद्वृत्तान्तमाकर्ण्य श्रीवासानुग्रहान्नृपः॥ ६४

श्रीचक्रपाञ्चजन्याभ्यां शत्रून् जित्वा स्वकीयकम्।
राज्यं यथावत् सत्पुत्रैः पालयन् मन्त्रिभिर्वृतः॥ ६५

जयी सिंहासनगतश्चक्रवर्ती प्रतापवान्।
तं द्रष्टुकामः सततं यत्नं कुर्वन् समाहितः॥ ६६

शङ्खचक्रे पुरा श्रीनिवासाज्ञया
चक्रवर्तेर्जयं कल्पयित्वा गते।
श्रीनिवासः स्वयं पार्थिवप्रार्थनात्
स्वान्तरे धारितुं ते तथा चाकरोत्॥ ६७

तस्य ज्येष्ठः सार्वभौमः सूर्यवंशोद्भवो नृपः।
नारायणवने पुण्ये राजधान्यां नदीतटे॥ ६८

आकाश इति विख्यातः पालयन् पृथिवीं जनान्।
विवाहकाङ्क्षिणीं पुत्रीं पिता प्रेक्षन्नचिन्तयत्॥ ६९

लावण्यरूपमहिमां मम गर्भजातां
श्रीवासभक्तिगुणसिन्धुनिमग्नचित्ताम्।
व्रीडासमेतनवयौवनमन्दहासां
यो वा विराट् परिणयेद्दुहितां सुशीलाम्॥ ७०

चिन्त्यमाने नृपे तस्मिन् भगवान् जगदीश्वरः।
विचित्ररूपसंपन्नं शुकमालोक्य कानने॥ ७१

ग्रहीतुकामः[1] संनद्धः श्वेताश्वमधिरुह्य च।
वनाद्वनं समागत्य नारायणवनं गतः॥ ७२

सखीभिः सहितां कांचिद्राजपुत्रीं विलोक्य सः।
"विचित्ररूपसंपन्ना नवयौवनशोभिता॥ ७३

दिव्यभोगोचिता त्वं मे भार्या भव मनोहरे"।
इत्युक्त्वासौ तथा राज्ञः राजधानीं प्रविश्य च॥ ७४

सर्वाभरणसंपन्नो भगवान् जगदीश्वरः।
चक्रवर्तिनमासाद्य कन्यां देहीति चाब्रवीत्॥ ७५

कृपया श्रीनिवासस्य सूक्तिं श्रुत्वा[2] नराधिपः।
तथास्त्विति तमभ्यर्च्य कनकाचलवासिने॥ ७६

वैशाखमासे चित्रायां शुभतिथ्यां शुभावहाम्।
औरसीं रूपसंपन्नां सर्वाभरणभूषिताम्॥ ७७

कन्यां ददौ सपत्नीकः पुत्रमित्रादिभिः सह।
वेदमन्त्रानुसारेण कल्याणं च यथाक्रमम्॥ ७८

कारयामास गुरुणा ब्रह्मादीनां समक्षमे[3]।
संतुष्टहृदयो भूत्वा ब्रह्मविद्भिर्नदीतटे॥ ७९

1. A,B: गृहीतु°  2. A,B: शृत्वा  3. for समक्षे

*अथ संवत्सराद्युत्सवमाह।*

वह्निच्छायाङ्गुलीभिः प्रथितवृषगिरौ मत्सुतेनोद्धृतं तत्
पञ्चाङ्गं श्रीनिवासः प्रकटितसदसि प्रत्यहं श्रोतुकामः।
वर्षादौ वर्षमध्यस्थितसकलफलं श्रावयन् स्वार्यगोष्ठ्यां
श्लाघ्यं वस्त्रं ममाग्रे मम च बहुमतिं योगिवर्यैर्बृहद्भिः॥ ८३

*अथ चैत्रप्रतिपदारभ्य चत्वारिंशद्दिनेषु[1] नित्योत्सवानाह।*

वसन्तर्तौ श्रीमान् वनगतविचित्राण्यनुदिनं
वरैः साकं द्रष्टुं वसनमणिभूषाशतयुतः।
विलासात् सायाह्ने विविधकुसुमालंकृततनुः
विभुत्वात् संचारं वितरति नृणां योगिषु मुदम्॥ ८४

प्रत्यागत्य[2] तदा वनाच्च कृपया श्रीभाष्यकारालयं
गत्वारण्यगतागतोदितवपुः क्लेशापनोदाय सः।
ताम्बूलादिफलैः समं गुडपयांस्यालोक्य सूपादिकान्
भुक्त्वा तानि नृणां ददात्यनुदिनं प्रीत्या वसन्तोत्सवे॥ ८५

*वसन्तोत्सवदिनेषु मध्ये श्रीरामनवम्युत्सवं[3] श्लोकद्वयेनाह[4]।*

वसन्ते वर्षादावदितिभयुते शुक्लनवमी-
कुलीरे मध्याह्ने दशरथसुतानां प्रियतमः।
चतुर्णां श्रीरामो जननविभवस्योत्सवकथां
मया श्रुत्वा रात्र्यां पवनसुतमारुह्य मुदितः॥ ८६

1. A,B: °द्दिनानि
2. A,B: °गच्च
3. A,B: °नवम्योत्सवं
4. A,B: दिनद्वये°

परेऽह्नि रामः परमार्थयुक्तं
पट्टाभिषेकोत्सवसर्गमुत्तमम्।
शुभं प्रभूणां यमिनां च मुक्तिदं
सकृत् सभायामश्रुणोत् सभार्यः।। ८७

*अथ ग्रीष्मर्तौ डोलोत्सवमाह।*

ग्रीष्मर्तौ विप्रमुख्याः गहनगतसुमान्यादरात् संगृहीत्वा
गन्धाद्यैर्वासितोर्व्यां प्रथितसुमकृते मण्टपे तं निवेश्य।
गन्धैः शीतोपचारामहनि निशि भृशं श्रीनिवासस्य पूर्तिं
नैवेद्यं कारयित्वा प्रतिशरदमिमे ब्रह्मनिष्ठा भवन्ति॥ ८८

*याम्यायनारम्भदिने आनिवराख्यास्थानोत्सवमाह।*

बृहद्योगिवर्येऽत्र सर्वाधिकार-
प्रशस्तोर्मिकादिश्रियं श्रीनिवासः।
महन्त्वाख्यनेतुः स्वमुद्रां च दत्वा
समग्राधिकारप्रतिष्ठां करोति॥ ८९

*तिरुवाडिप्पूरोत्सवं श्रीपुर्यां श्लोकद्वयेनाह।*

कुलीरगे भास्वति पूर्वफल्गुनी-
दिने तु गोदापतिना समं पितुः।
गृहं समासाद्य महोत्सवं नृणां
करोति वस्त्राभरणाद्यलङ्कृता॥ ९०

विष्णुचित्तात्मजा वेङ्कटाद्रावधः
प्राकृतान् रक्षितुं प्राप्य पित्रोर्गृहम्।
श्रीनिवासालयाच्छत्रवाद्यैः समं
विप्रवर्या हृतापूपमालोकयत्॥ ९१

*श्रावण्यां वैदिकोत्सवं श्लोकद्वयेनोक्तम्।*

श्रावण्यां पूर्णिमायां श्रवणयुतदिने श्रीनिवासाश्रितानां[1]
क्षेमार्थं पुष्करिण्यास्तटमुपविशति ब्राह्मणाः ब्रह्मयज्ञम्।
विष्णोर्यज्ञोपवीतं त्वजिनमपि तदा गोपविष्णोश्च मौञ्जीं
दण्डादीन् धारयित्वा हुतभुजि पुरतो होममाज्येन कृत्वा॥ ९२

वेषभाषाविशेषैर्विनुतशमगुणैर्विष्वगन्तः प्रविष्टैः
वेदारम्भं समन्ताद्विविधबुधजनैः साकमाचार्यधुर्याः।
कुर्वन्तोऽग्रे निविष्टाः प्रतिशरदममी वैष्णवाः द्वित्रिसंख्याः
लोके सर्वत्र मान्याः सकलबहुमतिं प्राप्तवन्तो भवन्ति॥ ९३

*श्लोकद्वयेन श्रीकृष्णजयन्त्युत्सवमाह।*

सिंहस्थेऽर्के वृषाद्रौ मुनिगणविनुते श्रीनिवासालयेऽस्मि-
न्नष्टम्यां कृष्णपक्षे रजतहरिरयं[2] कृष्णमूर्तिः प्रसन्नः।
डोलायामर्धरात्रौ मुनिवरविनुतः स्वीयजन्मप्रभावं
मत्तः श्रुत्वाऽथ गोष्ठ्यां मम च बहुमतिं कारयित्वार्यवर्यैः॥ ९४

प्रभाते श्रीकृष्णः प्रतिगृहजनाप्लावकरणे
प्रतोल्यां प्राविश्य प्रथितजननस्योत्सवविधौ।
प्रजानां तैलादीन् प्रतिशरदमेषां पृथगसौ
प्रतिष्ठार्थं दातुं प्रभवति शिशुत्वे प्रकटिते॥ ९५

1. A,B: °वासे श्रितानां

2. A,B: रजित°

*शिक्यप्रहारोत्सवमाह।*

नवम्यां सायाह्ने नवकृतलतामण्टपचयान्
प्रविष्टे श्रीवासे दधिमधुफलापूपभरितान्।
पुरो दारुस्तम्भानधिरुहजनान् वीक्ष्य कृपया
प्रतोल्यां श्रीकृष्णः प्रहसति विलासाद्वृषगिरौ॥

*श्रीवेङ्कटाचले इन्द्रस्य शापविमोचनमाह।*

शक्रः कामवशात् तिरोहिततनुः साध्वीमहल्यां प्रियां
भुङ्क्त्वा तत्पतिशापकारणवशाद्योनीसहस्रं तनौ।
संप्राप्य त्रपया शरीरमखिलं संकोच्य नाकेऽविशत्
पश्चाद्देवपतिं दिदृक्षुमनसो देवाः शचीमब्रुवन्॥

निद्रापरां मां प्रविहाय भर्ता
सुरोत्तमाः कुत्र गतो न जाने।
इतीरितं तद्वचनं निशम्य
ज्ञात्वा सरः प्राप्य तमिन्द्रमैक्षन्॥

देवाः सर्वे गीतवादित्रघोषैः
तुष्ट्वा चेन्द्रं तेऽब्रुवन् सर्वगात्रे।
मेढ्रा एता योनयस्ते भवेयुः
कामान् भुङ्क्ष्व[1] स्वाप्सरोभिर्यथेष्टम्॥

दृष्ट्वा मेढ्रसहस्रमप्सरगणाः भुङ्क्त्वा शचीचान्वहं
भोगान्ते त्रिदिवे त्रिलोकपतिना तुष्टा बभूवुः सदा।
पश्चात्तापमवेक्ष्य देवगुरुणा संचोदितो वासवो
विष्वक्सेनसरोवरं प्रतिगतस्तेपे सहस्रं समाः॥

---

1. A,B: भुक्ष्व

विष्वक्सेनसरोऽन्तिके सुरपतिः वज्रेण खात्वा गिरिं
स्नानार्थं हरिदेवपूजनकृते पाताललोकाज्जलम्।
उत्पाद्याशु जितेन्द्रियः प्रशमितक्रोधः पयःपानकृत्
पादाङ्गुष्ठतलेन तीर्थनिकटेऽतिष्ठत् तपश्चाचरत्॥ १०१

एवं तपन्तं शरदां सहस्रं
वराहरूपे भगवानुपेत्य।
वरं च दत्वा परमेप्सितं य-
दन्तर्दधे विश्वपतिर्वृषाद्रौ॥ १०२

अतो वज्रिदेहादरं भूमिभागे
पतन्तो बभूवुर्द्विजा मेहना ये।
सहस्रं व्रणानां तु चक्षुःसहस्रं
द्विजानां प्रसादादभूदिन्द्रदेहे॥ १०३

ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः।
शक्रं सिंहासनासीनं सहस्राक्षमपूजयन्॥ १०४

*अस्मिन्नगोत्तमे श्रीरामचन्द्रस्य वरप्रदानमाह।*

पुरारण्ये पम्पां दशरथसुतो लक्ष्मणयुतः
शबर्याचाराढ्यश्चिरमधिवसन् रावणजयम्।
चिकीर्षुः सुग्रीवं श्रितजनपुषं प्राप्य सहसा
वृषाद्रिं संप्रायात्[1] पवनतनयेनाप्यनुगतः॥ १०५

आकाशगङ्गानिकटे जनायाः[2]
पुण्याश्रमे मारुतिना प्रविष्टः।
श्रीरामभद्रस्त्रिदिनान्युषित्वा
श्रीस्वामितीर्थेऽतिमुदाप्लुतोऽभूत्॥ १०६

1. A,B: संप्राया
2. A,B: ज्जनायाः

फलानि माधुर्ययुतानि मारुतेः
करात् समानीय मुनिभ्य आदरात्।
चकार दानं प्लवगाधिपैः समं
कुटीः पृथङ्नैर्ऋतिदिग्विभागे॥ १०७

ततो रामः ससौमित्रिः सुग्रीवप्रमुखैः सह।
न्यवसद्वायुपुत्रेण पूजितः स्वादुभिः फलैः॥ १०८

तत्रावासं कुर्वतो राघवस्य
प्रायोऽनीके पञ्चतां याति शत्रुः।
इत्याकाशे वाक्प्रवृत्तिं च विष्णोः
श्रुत्वा रामो रावणं जेतुमैच्छत्[1]॥ १०९

*अथ वानरैर्वेङ्कटाचले[2] वैकुण्ठगुहावीक्षणमाह।*

सुग्रीवप्रमुखादिवानरगणाः रात्रौ वने स्वेच्छया
घुष्यन्तस्तरसा प्रविश्य विटपानास्वाद्य मध्वादिकम्।
एकस्मिन् दिवसे महावनगतां कांचिद्गुहां संघशो
दृष्ट्वा मोहवशं गताः प्रविविशुस्तत्रोत्कटास्तेऽभवन्॥ ११०

वैकुण्ठाख्यगुहा वने विधिकृता पर्व तमिस्रावृता
तत्रास्ते तपनीयनिर्मितसभा तस्यां महामण्टपः।
तस्मिन् दीप्यति कोटिसूर्यसदृशं दिव्यं विमानं हरिं
दृष्ट्वाऽस्मिन् कपिपुङ्गवाः परिवृताः भ्रान्ता बभूवुर्भृशम्॥ १११

तेजःपुञ्जान्निर्गतो दण्डधारी
भीमः सर्वान् भर्त्सयामास शीघ्रम्।
भीताः सर्वे वानरास्तावदारात्
निर्गत्येदं प्रोचुरव्यग्रचित्ताः॥ ११२

1. A,B: जैतु°  2. A,B: वानराः वेङ्क°

महावने गुहान्तरे प्रतापवान् स रावणः
रिपूनिमान् विवासितुं निलीय मत्सरान्वितः।
किमित्यमी वयं धिया ह्युतान्यदानवाधिपो
विशोधयाम सत्वरं गुहां प्रविश्य संभ्रमात्॥ ११३

गुहाद्वारमाराद्विमोहात् प्लवङ्गा-
श्चिरान्नावपश्यन् निशैव व्यरंसीत्।
प्रभाते प्रतस्थे प्रहृष्यन् प्रकामं
प्लवङ्गैश्च रामो विजेतुं विपक्षम्॥ ११४

प्लवगाधिपेन मनुजाधिपो यदा
शरणागतस्त्रिदिवसं सरित्पतेः।
करुणारसेन कलितेन सेतुना
प्रविशत्[1] त्रिकूटशिखरं सकार्मुकः॥ ११५

श्रीरामभद्रो विशिखेन बन्धु-
मित्रैः समं रावणमाहवे दृढम्।
संहृत्य पश्चाद्वनितामुपेत्य
रथं समारुह्य पुरीमगच्छत्॥ ११६

*अस्मिन् वेङ्कटाद्रौ षट्षष्टिकोटितीर्थेष्वष्टमासेषु मुख्यानि ज्ञानमोक्षप्रदान्यष्टतीर्थान्याह।*

वाल्मीकिप्रमुखा महर्षिनिवहाः स्वस्वाश्रमादागताः
पूताः स्वामिसरोवरस्य सलिले स्नात्वा तपश्चर्यया।
श्रीवासार्पितमानसाः बुधजनैः संमानिताः स्वाश्रितान्
लोकान् रक्षयितुं[2] जयाशिषममी कुर्वन्ति शेषाचले॥ ११७

---

1. A,B: प्रविश for प्राविशत्

2. for रक्षितुं

सवितुरुदये सर्वे देवाः समेत्य वृषाचले
सरसि सरितौ स्नात्वा विष्णुं वृषाद्रिनिवासिनम्।
परमपुरषं मत्वा नित्यं समार्जितसंविदा
हृदयकमलान्तस्थं द्रष्टुं चिरान्मृगयन्ति तम्॥ ११८

भारद्वाजवसिष्ठगौतमभृगुव्यासादयो योगिनः
गार्ग्यागस्त्यपुलस्त्यकाश्यपशुकब्रह्मर्षिभिः संयुताः।
मार्कण्डेयमरीचिशक्तिपुलहक्रत्वत्रिदूर्वाससां
गोष्ठीषु प्रवदन्ति केशवकथामद्यापि देवान् प्रति॥ ११९

विश्वामित्रसुमन्त्रसत्यमनवः श्रीयाज्ञवल्क्यादयः
सर्वास्त्राणि निरस्य कर्मनिरताः तीर्थेषु तीरेषु च।
जप्यन्तोऽनुदिनं स्वयं मुनिगणैः साकं तपः कुर्वतः
साध्यान् तीर्थकथा उशन्ति मनुजाभीष्टप्रदाः सर्वदा॥ १२०

तत्रान्तरे जैमिनिऋष्यशृङ्ग[1]–
विभण्डकाङ्गीरसशालिहोत्राः।
मतङ्गवैखानसवालखिल्य[2]–
सनत्कुमारादिमुनीन्द्रवर्याः॥ १२१

शाण्डिल्यजाबालिशताश्वमेधिनो
विरिञ्चिभूतेशपुरन्दरादयः।
नमन्ति विश्वात्मकमम्बरे सकृ–
द्विद्युत्प्रकाशं वृषभाद्रिवासिनम्॥ १२२

---

1. A,B: °ऋश्यशृ°  2. A,B: °वैघानस°

केचिच्छतानन्दयुताः सहस्रशो
सर्वेषु तीर्थेषु सदा निमज्जनम्।
कुर्वन्त एवाद्रिगुहासु संघशः
शंसन्ति तद्रूपगुणान् पदे पदे॥ १२३

नारायणाचलनिवासहरेः प्रभावं
षट्षष्टिकोटिसरितां च पराशराद्याः।
तीर्थेष्वजस्रममृतार्थधिया प्रकाम-
मद्यापि नारदमुनीरितमाहुरार्याः॥ १२४

*अष्टतीर्थनामान्याह।*

श्रीवेङ्कटाद्रिशिखरे कलुषापहारी
श्रीचक्रतीर्थमुत कापिलनामधेयम्।
श्रीस्वामिपुष्करिणिका[1] नवतीर्थपूर्णा
श्रीरामकृष्णवरतीर्थमभीष्टदायी॥ १२५

श्रीतुम्बुरोस्तीर्थमजस्रमद्भुतं
कुमारधारा बहुपुत्रदा नृणाम्।
स्वर्गापगा माधवसौख्यदायी
श्रीपाण्डुतीर्थेन सहाष्ट मोक्षदाः॥ १२६

कलौ युगे श्रियःपतेः सरोवरस्य वर्णनं
वियत्सुरापगाझरीनिमज्जनं कदाचन।
कुमारधारिकापयःकणामृतस्य सेवनं
सुदुर्लभं दिवौकसां महीतले नृणां विना॥ १२७

---

1. A,B: °ष्करणिका

मासेष्वष्टसु नृणां
तीर्थेषु स्नानजं फलं श्रेष्ठम्।
ज्ञानामृतमायुष्यं
पश्चान्मोक्षं ददाति मर्त्यानाम्॥ १२८

तुलाराशिं भानौ प्रविशति यदा भास्करतिथौ
वलर्क्षे पक्षेऽस्मिन् दिनकरदिने पुण्यसरसि।
वराषाढायुक्ते घनरसयुते प्राकृतजनाः
ममज्जुश्चेत्तेषां सकलफलपर्याप्तमभवत्॥ १२९

भुजगेन्द्रशैलवसती मलापहा
मनुजस्य पापमपहृत्य सूचिका।
भुवनेषु तीर्थजलसंक्रमादसौ
न समाधिका भवति मोक्षदा नृणाम्॥ १३०

तत्तीर्थे यः पुमान् पापोऽप्यघमर्षणपूर्वकं
स्नानं कृत्वात्र विधिवच्छ्रोत्रियाय महात्मने।
सालग्रामशिलां गां च दद्याच्छ्रीवेङ्कटाचले
मुच्यते सर्वपापैश्च जन्मकोटिश-(ताधिकैः)[1]॥ १३१

*कार्तिक्यां चक्रतीर्थप्रभावमाह।*

रा नागलोके सुरैः सेव्यमानः
ावः कापिलाख्यः स्थलं वेङ्कटाद्रौ।
ातश्चक्रराज्ञा भृशं पूजितः सन्
सरः कल्पयित्वा स्वयं प्रादुरासीत्॥ १३२

1. A,B: °श...

वृषभूधरं त्वधिवसन्नुमापतिः
विनतानवन् सकलकामपूरणात्।
कपिलाभिधेन ऋषिणा समं बुधै–
रभिपूजितः प्रतिदिनं प्रकाशते॥ १३३

यदा वृश्चिकस्थे रवौ पूर्णिमायां
सदा चक्रतीर्थे रवेरुच्चकाले।
मुदा गोपविष्णोः सदा रावणारे–
श्चिरादाप्लवः स्यात् समं योगिवर्यैः॥ १३४

कन्यां गोभूहिरण्ये कपिलऋषियुते तीर्थवर्ये प्रदद्या–
द्यः कश्चिद्द्विप्रमुख्ये वितरणविभवः ज्ञानभक्त्या समेतः।
अक्षय्यं पुण्यलोके फलमचलसमं संत्यजन् विष्णुरूपं
देहं संप्राप्य मान्यः स जयति पुरुषः सर्वदा सूरिवर्यैः॥ १३५

दशाधिकफलं नृणां कपिलतीर्थमारभ्य गि–
र्युपर्युपरि मज्जतां प्रतिकलाविहामुत्र च।
शुभानि च महेश्वरः सततवासिभिर्विष्णुभिः
समं दिशति मुक्तिदः सकलयोगिनां चामृतम्॥ १३६

*अथ स्वामिपुष्करिणीमाहात्म्यमाह*[1]।

प्रत्यब्दं गरुडाचले हिमऋतौ शार्ङ्गे गते पूषणि
द्वादश्यामरुणोदये धवलके पक्षे प्रबन्धोत्सवे।
गङ्गासिन्धुकवेरजादिसरितः श्रीस्वामिपुण्योदके
मर्त्यानीतमलापनोदनविधौ मज्जन्त्यहो वैभवम्॥ १३७

---

1. A,B: °पुष्करणी°

ज्ञानितया भक्ततया
शीलतया दानकारिभिर्दान्तैः।
सेवितममृतार्थधिया
श्रीपतिरानन्ददायको भवति॥ १३८

हरिदिवसेऽप्युपवासं
भक्त्या संप्राप्य भूधरे मनुजाः।
श्रीधरकरुणाकलिते
तीर्थे मज्जन्ति साधुभिः सहिताः॥ १३९

प्राक् सूर्योदयतो मुहूर्तसमये श्रीवेङ्कटेशाज्ञया
तीर्थे स्वामिसरोवरस्य सरितां यात्रार्थसिद्धिप्रदाः।
गङ्गाद्याः सकलापगाः शुभफलं देवैः समाराधिताः
क्रीडित्वा समुपादिशन्निह परे नृणां विभूतिद्वये॥ १४०

*मार्गशीर्षे रामकृष्णतीर्थप्रभावमाह।*

ग्रहगणपरिवारे नक्रसंस्थे च भानौ
विधुकिरणयुतायां पूर्णिमायां च तिष्ये।
नियतममृतकल्पे रामकृष्णाख्यतीर्थे
सकलफलममीषां मज्जतां चाहुरार्याः॥ १४१

*अथ कुमारधारिकातीर्थप्रभावमाह।*

तारकासुरवधेन हत्यया
पीडितः प्रतिदिनं षडाननः।
ईश्वरं स्वपितरं समुपेत्य
व्याजहार विवशत्वममुष्य॥ १४२

तं निशम्य परमं च रहस्यं
संदिदेश तनयं वृषकेतुः।
तद्वदाचरितुं विनयान्वितः
स्वर्णदीतटमवाप कुमारः॥ १४३

तत्र वर्णितमगस्त्यशुकाद्यैः
वेङ्कटाचलपतेश्च महत्त्वम्।
तीर्थवैभवममुत्र नितान्तं
श्रुण्वतोऽस्य सुलभं वपुरासीत्॥ १४४

षडाननकलेबरादपससार भूताकृतिः
सुवर्णमुखरीजलावतरणे क्षमातत्त्वतः।
अयं तु कृपया मुदा मुनिगणैः समाराधितो
वृषाचलमुपारुहद्वृषगिरीशमाराधितुम्॥ १४५

भवात्मजस्य पूजया दिवानिशं तपोबला–
द्रमापतिर्वरं मुदा प्रदातुमादरात् प्रभुः।
सदागतेर्दिशं गतः सभान्तरे सवाहनः
समग्रमूर्तिसंपदा सतां दृशः समाविशत्॥ १४६

नभोगता नमज्जना नराधिपैर्नमस्कृताः
स्वभावतः स्वरूपतः स्वतेजसा स्वतोऽधिकाः।
मदोत्कटैर्मरुद्गजैर्मरुत्वता प्रहर्षितैः
प्रसूनवृष्टिसंपदः प्रसन्नमूर्तयेऽर्पिताः॥ १४७

पार्वतीनन्दनः पङ्कजाक्षाद्वरं
पर्वते संसदि प्राप्तवानञ्जसा।
पर्वकाले सकृन्मज्जनं कुर्वतां
पुत्रसंपद्भवेत् पुण्यतीर्थे नृणाम्॥ १४८

कौमारतीर्थं कलुषापहं नृणां
बभूव तीर्थेषु कवेरजासमम्।
कष्टेन साध्यं कमलापतेः प्रियं
काम्यार्थदः कल्पतरुर्यथा दिवि॥ १४९

कुम्भे मासे पूर्णिमायां मघायां[1]
पुण्ये लोके पुत्रकामा वृषाद्रौ।
पुण्ये तीर्थे स्नानमद्याचरन्ति
पुत्रास्तेषां[2] श्रीनिवासो ददाति॥ १५०

*(अथ तम्बुरतीर्थप्रभावमाह।)*

श्रीतुम्बुरोस्तीर्थवरे दिवाकरे
झषंगते पूर्णकलातिथौ पुनः।
न जायते स्नानफलाच्च मर्त्यो
वैकुण्ठलोके वसतिं करोति॥ १५१

*चैत्रमासे[3] आकाशगङ्गातीर्थफलमाह।*

उच्चस्थो द्युमणिः सहस्रकिरणो भूम्यन्तरिक्षं दिवा
नक्तं च प्रविशोषयन् प्रतिदिनं चाकाशगङ्गाजलम्।
वृद्धिं प्रापयिता[4] स्वकीयकिरणैरभ्रंगतः श्रीपते-
रर्चाबिम्बमुखाम्बुजे निगमतो दाक्षिण्यमक्षि ह्यभूत्॥ १५२

---

1. A,B: मखायां
2. ungrammatical
3. A,B: चैत्रे मासि
4. for प्रापयित्वा

अन्तर्गुम्फितकमलं[1]
बहिरपि करिहस्तदण्डवत्पतितम्।
कथमिव तीर्थं नृणा–
मद्रौ मोक्षार्थदं परं न स्यात्॥ १५३

*अथ गोगर्भतीर्थप्रभावमाह।*

पुण्ये स्वामिसरोवरस्य निकटे गोगर्भतीर्थे पुरा
गौरीशः प्रमदैर्वृतः प्रतिदिनं श्रीवासमाराध्यते।
तस्मादद्यतना जनाश्च बहवो पापापनुत्यै सदा
मज्जन्त्यत्र विशेषतो ववृधिरे वस्त्रादिदानाच्च ते॥ १५४

*अथ वैशाखमासे पाण्डवतीर्थप्रभावमाह।*

कृष्णेनाप्युपदिष्टाः
पाण्डोः पुत्रा वृषाद्रिमुपयाताः।
श्रीवासं यदपश्यन्
शत्रून् जेतुं जयावहं स्वप्नम्॥ १५५

तस्मादेते पाण्डुपुत्राः सभार्याः
बाणैर्भित्त्वा कन्दरानद्रिनासौ।
शत्रून् जित्वा राज्यमादातुकामाः
वासं चक्रुर्वर्षमेकं मुनीन्द्रैः॥ १५६

अतश्चाप्लुतानां मुनीन्द्राः प्रकामं
वृषस्थे रवौ शुक्लपक्षेऽर्कवारे।
दिने विष्णुयुक्ते समायाति गङ्गा–
फलं संगमान्ते जगुः पाण्डुतीर्थे॥ १५७

1. A,B: °गुम्भित°

पाण्डवतीर्थमहिम्ना
गोभूदानेन भूधरे मनुजाः।
प्राचीनप्रतिबन्धा-
न्मुच्यन्ते दुष्टकर्मकरणाच्च॥ १५८

एवं चाष्टसु मासेषु तीर्थेषु स्नानजं फलम्।
नानाप्रकारदानानां माहात्म्यं परमेष्ठिना।
शेषेणापि प्रयासेन वक्तुं शक्यं न कुत्रचित्॥ १५९

*एवमष्टतीर्थफलान्युक्त्वा बलरामस्य तीर्थयात्राफलपूर्तिमाह।*

यदा रौहिणेयः सदा तीर्थयात्रां
प्रकुर्वन् वृषाद्रौ गते दृष्टियुक्ते।
फलं कृत्स्नमारादवाप्य प्रहृष्टः
पुरीं बन्धुवर्गैः समं चाविवेश॥ १६०

*अस्मिन् श्लोके तिरुमलनम्बिप्रभावमाह।*

आस्तां नाम पुराकृतं प्रतिदिनं श्रीशैलपूर्णो महान्
स्वर्गङ्गासलिलं सुवर्णकलशे संपूर्य गच्छन् पथि।
एकस्मिन् दिवसे हरिश्च तृषितो धन्वी शरेणाहता-
द्रन्ध्रान्निर्गतशुद्धतोयमखिलं पीत्वा तमप्यस्तुवत्॥ १६१

*अपि च पुरिशै अनन्तान्पिल्लैप्रभावमाह।*

अन्यच्चित्रमभूत् कलत्रसहितोऽनन्तार्ययोगी पुरा
श्रीशैलेऽनुदिनं तटाकखननप्रारम्भकाले सदा।
भर्तृप्रेमवशात्तदाहृतमृदं साध्वीं सगर्भां च तां
दृष्ट्वा काञ्चनशैलराड्द्रुतगतिस्तद्भारमूहे पुरा॥ १६२

अनन्तसूरिणा पुरा तटाकसेतुबन्धने
कृते चतुर्भुजः स्वयं खनित्रलोहमुद्गरम्।
प्रगृह्य गोपुरान्तरे न्यधत्त्वतो जनाश्चिरं
गतागतेषु नित्यशो विलोकयन्ति संभ्रमात्॥ १६३

*[अथ चतुर्युगे वेङ्कटाद्रेर्विंशतिनामान्याह।]*

अञ्जनाद्रिवृषभाद्रिवृषाद्रि-
र्गारुडाद्रिकनकाद्रिसुमेरुः।
शेषसिंहकिटिपुष्कलनील-
ज्ञानतीर्थगिरिरित्यभिधाद्रेः॥ १६४

नारायणाद्रिरिति वेङ्कटभूधरेति
वैकुण्ठवामनमणीन्द्ररमानिवासाः।
श्रीशैलवर्य इति विंशति नामधेया-
न्यद्रेः कलावपि वदन्ति महर्षिसंघाः॥ १६५

*श्रीनिवासस्य सकलकैङ्कर्यफलान्याह।*

फणीन्द्रभूधरे सदा मुनीन्द्रसेविते नृणां
सुवर्णरत्नवाससां सकृत् प्रदानमादरात्।
यशश्चिरायुरात्मजानतीव संपदं कलौ
महत्सुखं ददात्यहो[1] श्रियःपतेरनुग्रहात्॥ १६६

पितृभ्योऽन्नश्राद्धं यदि दिशति मर्त्यो वृषगिरौ
सकृच्चान्नं भूमीकपिलपशुशङ्खान्यपि तदा।
श्रियं लोके तुष्टामतिविभवमासाद्य सहसा
स वैकुण्ठे पश्चाद्वसति चिरमानन्दविभवे॥ १६

1. for आप्नोत्यहो

माषापूपमनोहराणि नितरां नैवेद्यमाकल्पये-
च्छ्रीमद्वेङ्कटशैलनायकमणेः सर्वार्थकामान् नरः।
संप्राप्य त्रिदिवे महेन्द्रमहितः पुण्यानुभोगं सदा
पश्चात् सर्वगुणाश्रयस्य कृपया सारूप्यमाप्नोत्यसौ॥ १६८

श्रीश्रीनिवासस्य सहस्रनामभिः
श्रीपादपद्मे तुलसीदलैः सकृत्।
यो वाकरोद्भक्तिवशात्[1] सपर्यां
प्राप्नोति कैङ्कर्यसमग्रसिद्धिम्॥ १६९

मरीचिमुद्गान्वितमाषतिन्त्रिणी-
संयुक्तमन्नं तिलसर्षपान्वितम्।
दध्योदनं क्षीरघृतादिमिश्रितं
गुडोदनं पायसमद्भुतं हरेः॥ १७०

समर्पितं येन महात्मना यदि
व्रीहीसमग्रं नवनीतसंयुतम्।
नीराजनं[2] नित्यमनन्तमूर्तये
संप्रापितस्तेन विभूतिवैभवः॥ १७१

पुष्पोद्यानवनानि शैलनिकटे यो वासमुत्पाद्य च
श्रीवासं समुपेत्य पुष्पतुलसीमालाभिराराधयेत्।
सद्यः पापसमुच्चयाद्विरमतिं संप्राप्य विष्णोः पदं
ोक्षैश्वर्यमुपैति नित्यमजडः सायुज्यमस्याकृतेः॥ १७२

श्रीवासभोग्यं विविधैरुपेतं
रसैश्च षड्भिर्दधिसर्पिसंयुतम्।
श्रीभाष्यकाराय च नित्यमादरा-
दन्नं प्रदद्यात् स उपैति मोक्षम्॥ १७३

1. for वा करोति भ०

2. A,B: नीराङ्कजनं

गरुडाश्वगजेन्द्रवाहनानि
यदि वैकुण्ठपतेः करोति यः।
सुतरां त्रिदिवे सुखान्वितोऽसौ
कृपया मोक्षमवाप्नुयाद्ध्रुवम्॥ १७४

वृषाचले जगत्पतेरमन्त्रणोत्सवं[1] सकृ-
द्दिवानिशं प्रदक्षिणं विमानमन्ततो हरेः।
सभक्ष्यमन्नमादरात् पृथक्पृथङ्निवेदनं
करोति चेदनन्तरं त्रिविष्टपं स विन्दति॥ १७५

कल्याणोत्सवमादरात् कलियुगे लक्ष्म्या सह श्रीपतेः
तन्नाम्ना कृतमण्टपे कतिपयग्रामाधिपैः संयुतः।
यो वा भक्तिमवाप्य कारयति चेत् साम्राज्यमासादयन्
पश्चान्मोक्षमुपैति नित्यनिलये वैकुण्ठसेवां चिरम्॥ १७६

काञ्चनशैलेऽर्चकराट्
काञ्चनकूपात् पयः समानीय।
काञ्चनकलशसहस्रे
काञ्चनरत्नैः प्रपूर्य पुण्याहम्॥ १७७

कृत्वाथ तीर्थैरभिषेकमस्मा-
द्ये कारयन्त्याश्रितभोगमूर्तेः।
ते नित्यवासं परमां च भक्तिं
देहावसानेऽमृतमाप्नुवन्ति॥ १७८

वाचस्पतिवारेऽस्मिन्
वस्त्रैः पुष्पैः करोति कवचानि।
वनजाक्षस्य पदे द्राक्
वसतिं प्राप्नोत्यमुष्य कृपयासौ॥ १७९

1. अमन्त्र° for आमन्त्र° to save metre (cf. pāṇ. 3.3.161)

वैकुण्ठनाथस्य वृषाचलेशितुः
काव्यस्य वारे कुरुतेऽभिषेचनम्।
सिताभ्रकाश्मीरसुतैलवाससां
मूल्यानि दत्वा स पुमान् धनी भवेत्॥ १८०

प्रीत्या चन्दनकर्दमैर्बहुतरं श्रीवेङ्कटेशालये
कर्पूरागरुकुङ्कुमादिमिलितैर्गर्भान्तरालं द्विजैः।
कुर्वन्तो यदि लेपनं नरवराः श्रीश्रीनिवासं च ते
पश्यन्त्यत्र न केवलं हरिपदे मुक्तैः समं सर्वदा॥ १८१

महीतले महास्थले महद्यतीश्वराज्ञया
महात्मनां मनोहरं महद्धनव्ययात्[1] कृतम्।
महानिवेदनं सकृन्महात्मने मधुद्विषे
महीपतीभिरादृतं मनीषिणार्पितं यदि॥ १८२

सदाचारनिष्ठो वरिष्ठः स धीमान्
प्रभूणां प्रसिद्धः प्रजानां प्रवक्ता।
वराणां वरिष्ठः सुराणां सुपूज्यो
धरायां धनाढ्यः प्रशान्तः प्रभुः स्यात्॥ १८३

मणिदर्पणशालायां
मणिकृतकवचेन शोभितं विष्णोः।
रमया सह तद्बिम्बं
परितः पश्येत् पुमानसौ लोकम्॥ १८४

1. A,B: °नव्रयात्

स्वर्णच्छत्रं मणिगणयुतं रूप्यदण्डानुविद्धं
श्वेतच्छत्रद्वितयमपि वा रुक्मदण्डद्वयं च।
यो वा तार्क्ष्यजन्मपि दिशेच्छ्रीनिवासाय घण्टां
बर्हापीडव्यजनसहितं प्राप्नुयादिन्द्रभोगम्॥ १८५

महारजतशृङ्खलैर्महितडोलया[1] संयुतां
प्रशस्तमणिशोभितां राजतमञ्चसेवां[1] निशि।
प्रभासहितशार्ङ्गिणः चलितभोगमूर्तेः सकृत्
करोति यदि भूधरे स च सुराधिपः स्यात् सदा॥ १८६

*दीपाराधनफलम्।*

पुरा विष्णुवर्धः[2] श्रिया गर्वितः सन्
गुरुं मारयित्वा गृहे संनिविष्टः।
सदा पापचर्यात् सहस्रं वधूनां
भुजित्वातिकामादभूत् कुष्ठरोगी[3]॥ १८७

नित्यं बन्धुजनैर्विगर्हिततनुर्निःस्वोऽतिदुःखान्वितः
धिष्ण्ये चाग्निविगाहिते निरुपमक्रोधाद्वनं प्राप्तवान्।
क्षुद्बाधासु सृगालभक्षणमहोरात्रं प्रकुर्वन्नसौ
चाकृष्यन् यमकिङ्करैः निपतितः स्याच्चण्डकोलाहले॥ १८८

तत्पुत्रो देवनामा गुरुवरपदयोर्भक्तिमान् वेङ्कटाद्रिं
श्रीभूनीलासमेतं श्रितजनसहितं श्रीनिवासं प्रणम्य।
संस्मृत्वा पापचर्यात् पितरमतिकृशं श्रीनिवासस्य दीपं
चाहोरात्रं निदध्यान्नरकचयबलात्तत्पिता मोक्षमाप[4]॥ १८९

---

1. A,B: °रजित° 2. for °वर्धनः 3. A,B: कुष्टुरोगी
4. potential mode for imperfect

दीपाराधनमालये कृतवतामाज्येन भक्त्यानिशं
क्षीयन्ते गुरुतल्पपापनिवहाः सद्यः शुभं चाभवत्।
यो वा वाद्यविशेषमादरवशाद्दाता यदि श्रीपतेः
सद्यः पातकसंचयाद्विगलितः संपूर्णकामो भवेत्॥ १९०

श्रीवास नारायण चक्रपाणे
श्रीपद्मनाभाच्युत वासुदेव।
श्रीकृष्ण गोविन्द हरे मुरारे
श्रीराम दामोदर माधवेति॥ १९१

वैकुण्ठनामानि सदा ब्रुवन्तः
शुकादयो द्वारि समर्पिताश्चेत्।
तस्यानिशं स्वर्गफलं प्रक्लृप्तं
पुण्यक्षये भूमितले जनिः स्यात्॥ १९२

महीतले महीधरे महोन्नतो महारथः
महर्षिभिः सुपूजितो महाजनैरुपासितः।
महद्धनव्ययात्[1] कृतो मनीषिणां सुसम्मतः
मधुत्विषे महात्मने मनीषिणार्पितो यदि॥ १९३

अनादिकालसंगतामपारसंसृतिं जवा-
दपास्य दुष्टवासनाममोक्षमार्गसाधनीम्।
अपेक्ष्य सज्जनाश्रयं ह्यकुण्ठवैभवं चिरा-
दपेक्ष्य मोक्षमादरादुपैति तत्क्षणं पुमान्॥ १९४

1. A,B: °नव्रयात्

पूर्वं लीलाविभूत्यामवतरति सति श्रीनिवासे वृषाद्रौ
ब्रह्मेन्द्राद्याः प्रहृष्टाः प्रतिशरदमिमं चोत्सवं श्रीधरस्य।
लोकादागत्य कृत्वा स्वपदमपि यथा प्राविशन् प्रोष्ठपद्यां
श्रीवासस्योत्सवं यः सकृदपि कुरुते तत्पदं याति शीघ्रम्॥ १९५

*श्रीवेङ्कटाद्रेरधःप्रदेशे सुवर्णमुखरीनद्यां श्रीनिवासश्रीपादमुक्कोटिफलमाह[1]।*

अगस्त्यधरस्य पुरस्तात्
काञ्चननद्यां शिलातले विष्णोः।
श्रीपादं प्रणतानां
श्रीपतिरिष्टार्थदः कथं न स्यात्॥ १९६

कार्तिक्यां पूर्णिमायां मधुरिपुपदयोर्दर्शनं स्नानमारात्
कृत्वा तत्तीरवासी पशुपतिनमनं प्राणिभिः साधितश्चेत्।
तस्मात् प्रीतः प्रकामं प्रकृतिगुणवतां ज्ञानभक्त्यादिसौख्यं
नृणामायुष्यवृद्धिं श्रियममृतफलं श्रीनिवासो ददाति॥ १९७

*श्रीवेङ्कटाद्रौ कटाहतीर्थप्रभावमाह।*

विप्रः केशवनामको ह्यनुदिनं चौर्येण हृत्वा धनं
बन्धुं विप्रवरं बलेन च शिरः छित्वा गृहं हत्यया।
संप्राप्तं तनयं विशोच्य बहुधा मात्रा[2] पिता सादरं
भारद्वाजमुपेत्य पुत्रममलं कर्तुं व्यजिज्ञापयत्॥ १९८

तद्वाचमाकर्ण्य तदाह योगिराड्–
भो पद्मनाभाद्रिवरेषु मुख्यम्।
कटाहतीर्थं च पिबेच्च हत्यया
विमुक्तमानः सुखमेति ते सुतः॥ १९

1. मुक्कोटि is a Telugu expression for "three crores"

2. A,B: माता

कटाहतीर्थसेवनं कलौ च मोक्षदायिनं
महागदप्रमाधिनं महत्सुखप्रदायिनम्।
महाप्रभावशालिनं महाशुचिप्रवर्धनं
महामतिप्रबोधनं मनःप्रसादकारिणम्॥ २००

*वायुस्तवमाह।*

वायोर्वर्षसहस्रमम्बरतले ग्रीष्मे तपः कुर्वतः
श्रीवासस्तमवेक्ष्य चादरवशात्ताक्ष्र्येण संवाहितः।
श्रीभूम्यां सहितोऽपि कार्मुकधरः श्रीशङ्खचक्रान्वितः
चक्षुर्गोचरतामुपेत्य सहसा सम्यक् स्तुतो हर्षितः॥ २०१

झषकमठवराहसिंहहंसे-
ष्वखिलनृपेषु सुरेषु बाडवेषु।
अवतरसि भवान् कृपाविशेषा-
द्विबुधवरप्रद मङ्गलं तवास्तु॥ २०२

*अनन्तरं शुकपुर्यां सूर्यनारायणप्रभावमाह।*

वैकुण्ठलोकं वृषशैलवासं
क्षीरार्णवं चापि विसृज्य भूम्याम्।
सुवर्णनद्यास्तटवासमैच्छत्
प्राक् सूर्यनारायणविष्णुरम्बरात्॥ २०३

*तत्र पद्मावत्याः प्रभावमाह।*

शेषाचलप्रान्तनदीतटस्थ-
शुकाश्रमं प्राप्य तपश्चकार।
दूर्वाससः शापवशाद्धरिप्रिया
सुरालयात् कृष्णबलान्विता सति॥ २०४

पद्मप्रिया स्वर्णनदीतटस्थ-
पद्माकरे पद्ममधिश्रिता श्रीः।
नारायणं प्राप्य ऋषेः प्रसादा-
न्मोक्षं प्रदातुं भुवि मानवानाम्॥ २०५

दिव्याब्दानामयुतं
काञ्चनकमले तपस्विनीं दृष्ट्वा।
ब्रह्मेन्द्राद्या ऋषयो
नम्रीभूताः श्रियं तदानर्चुः॥ २०६

हे पद्मे हरिवल्लभे श्रितजनानुक्रोशसंधायके
विद्युत्कान्तिसमप्रभे निरुपमानन्दैकराज्यप्रदे।
बिल्वैरर्चितपादपद्मयुगले बिम्बानने भार्गवि
पद्मोल्लासकरे सदा शुकमुनेरामोदकर्त्र्यै नमः॥ २०७

इति स्तुत्वा देवीं चिरमतिकृशां पद्मकुहरे
वरं दत्वा लक्ष्म्यै स्वपदमविशन् ते करुणया।
ततो रन्तुं श्रीशः सह परिकरैर्भूषणशतै-
रलंकृत्वा पादं श्रियमुपयेमे[1] पूर्णकृपया॥ २०८

---

1. A,B: °पयमे

वृश्चिकराशौ सूर्ये
पाण्डरपक्षे दिवा च पञ्चम्याम्।
पद्मसरोवरतीर्थे
स्नानं कुर्वन्ति ते श्रियं यान्ति॥ २०९

अशेषविद्वज्जनलालनीयं
पद्माविवाहं परमं रहस्यम्।
प्रायः प्रपन्नामृतमादराद्बुधाः
शृण्वन्ति ते मुक्तिमवाप्नुवन्ति॥ २१०

अध्यायत्रितये वृषाचलपतेः पुण्यां कथां शृण्वतां
भक्तानां सुखमायुरर्थमनिशं पुत्रान् ददाति स्वयम्।
कर्मज्ञानविशेषभक्तिकरुणासन्दोहमन्यादृशं
सल्लापं च सतां सभासु गुरुभिः साकं ममाप्यच्युतः॥ २११

*॥इति श्रीवेङ्कटाद्रौ अनेकऋषिप्रोक्त-*
*सकलपुण्यतीर्थस्नानफलैः साकं*
*ब्रह्मोत्सवादिसकल-*
*कैङ्कर्यकथा नाम*
*तृतीयोऽध्यायः॥*[1]

1. A,B add: श्रीमते रामानुजाय नमः। अस्मद्गुरुभ्यो नमः। तृतीयाध्यायः परिसमाप्तः।

# चतुर्थोऽध्यायः[1]

अध्यायत्रितये पूर्वं वेङ्कटाचलवासिनः।
युगान्तरकृतान्यत्र कथितानि मुनीश्वरैः॥ १

तानि सर्वाण्यहं वक्ष्ये श्रीनिवासस्य शासनात्।
श्रीशैले श्रीपुरे चाद्य शुकपुर्यामितस्ततः॥ २

नवीकृतानि जीर्णानि कैङ्कर्याणि कृतान्यहम्।
अध्याये च तुरीयेऽस्मिन् श्रूयन्तां साधवोऽधुना॥ ३

गोविन्दनाम्ना प्रथितः[2] श्रियःपतिः
श्रीवेङ्कटेशः श्रयतां शरण्यः।
श्रीराजधान्यां श्रितशेषभोगः
श्रीभूमिगोदासहितो विराजते॥ ४

रमया सहात्र वरयोगिभिः समं
फणिभोगवासमधिगम्य याचितः।
करुणारसेन परिपालयन् जनान्
परिदृश्यतेऽत्र गरुडाचलाधिपः॥ ५

वृषभूधरस्य निकटे वसन् जनान्
विनतानवन् सकलकामपूरणात्।
फणिनायकाङ्कमुपशोभयन् मुदा
कृपया विराजतितरां रमाविभुः॥ ६

---

1. A, B : अथ चतुर्थाध्यायप्रारंभः।

2. A,B: प्रथित

असह्यापचारान् रमासंदितार्थः
सहित्वा जनानां परं कौतुकेन।
रमाविष्टचित्तः सदा कल्पितश्रीः
प्रभावं मुनिभ्यो दिशत्युत्सवेषु॥ ७

पुरा नारायणगिरौ भाष्यकारो यतीश्वरः।
बौद्धाद्युपद्रवे प्राप्ते श्रीनिवासस्य शासनात्॥ ८

शास्त्राण्यालोक्य सर्वाणि पुराणानि दशाष्ट च।
प्रबन्धान् वेदतात्पर्यान् प्रभावं च श्रियःपतेः॥ ९

रूपं चेदम् ऋषिप्रोक्तं ज्ञात्वा दृष्ट्वा विशेषतः।
विष्णुना कृतसिद्धान्तस्थापनं कर्तुमादरात्॥ १०

वक्षसाश्लिष्टदारोऽयं विष्णुरेव न संशयः।
इति विद्वत्सभायां च शपथं कृतवानयम्॥ ११

भवात्मजभ्रान्तिरमेशहस्तयोः
श्रीशङ्खचक्रे नवरत्नशोभिते।
समर्प्य बौद्धादिविपक्षखण्डनं
कृत्वात्र राज्ञा यतिराड्विराजते॥ १२

पश्चाच्छ्रीशेषशैलेऽस्मिन् हत्तीराम इति श्रुतः।
विरागी श्रीनिवासस्य यतिराजस्य शासनात्॥ १३

कांस्यघण्टाद्वयं चात्र वाहनद्वितयं महत्।
कारयित्वा सुकर्मेण[1] परां गतिमुपागमत्॥ १४

1. for सुकर्मणा

तच्छिष्यवर्गे धर्मिष्ठः सेवादास इति श्रुतः।
धनुर्धरस्य कृपया मठे पट्टाभिषिक्तवान्॥ १५

तदारभ्यातिथीन् सर्वान् पालयन्निह संस्थितः।
एतस्मिन्नन्तरे राज्ञा विष्णुपूजाविचारणे॥ १६

कृतवान् सोऽपि वैरागी कैङ्कर्ये कृतनिश्चयः।
मुख्यकैङ्कर्यनिचयेष्वनुष्ठेयं मया च यत्॥ १७

श्रीवेङ्कटाद्रौ प्रथमं रमापतेः
संस्थानसौधस्य समीपवर्तिनम्।
श्रीमानयं वाहनमण्टपं हरेः
संपूर्णमाबध्य यशः समागमत्॥ १८

पश्चाच्छ्रीवेङ्कटेशस्य रथनिर्माणहेतवे।
देशान्तरेभ्यश्चाहूय दारुशिल्पविशारदान्॥ १९

क्रीत्वा चाहृत्य दारूणि अयःपुञ्जान्यनेकशः।
असंख्येयानि रौप्याणि व्ययं[1] कृत्वा श्रियःपतेः॥ २०

महारथं नवीनं तैर्निर्मायालोक्य वत्सरे।
ये चित्रकर्मनिपुणाः ये केचिद्वस्त्रशिल्पकाः॥ २१

रथालङ्कारकरणे चाहूताः परिचारकैः।
तैर्निर्मितैर्महामूल्यैर्नवीनैः कम्बलादिभिः॥ २२

उत्सवे श्रीनिवासस्य भूषयित्वा रथोत्तमम्।
श्रीभूमिसहितं विष्णुमलंकृत्य विशेषतः॥ २३

1. A,B: व्रयं

रथमध्यारोहयित्वा शुभे लग्ने द्विजोत्तमैः।
नवग्रहाणां प्रीत्यर्थं यात्रादानं श्रियःपतेः॥ २४

निवेदनं कारयित्वा स्वादुभिर्बहुभिः फलैः।
पुष्पमाल्याद्यलंकारं कारयित्वा श्रिया सह॥ २५

नीराजनस्य[1] समये भ्राजमानं श्रियःपतिम्।
ससेव्य पण्डितैः साकं देवादीनां समक्षमे[2]॥ २६

वैकुण्ठे यावदानन्दं प्राप्तवानिह नित्यशः।
ब्राह्मणेभ्यो बहुद्रव्यं शिल्पिनां च विशेषतः॥ २७

दानमानादिरूपैश्च तोषयित्वा सहस्रशः।
रथयात्रां बहुजनैः कारयित्वा श्रियःपतेः॥ २८

तद्वर्षे रजतस्वर्णमिश्रितं[3] वाहनद्वयम्।
कल्पयित्वा समर्प्यास्य गोविन्दस्य कृपावशात्॥ २९

आन्दोलिकां दन्तमयीं पन्नगं[4] च महाद्भुतम्।
मुक्तामयकिरीटानि द्रष्टॄणामद्भुतानि च॥ ३०

नारायणाद्रेराग्नेयदिग्भागे शुकपूजिते।
अगस्त्याश्रमसामीप्ये सुवर्णमुखरीतटे॥ ३१

पद्मालयायाः पद्मिन्याः सोपानानां च सौष्ठवम्।
कर्दमं च बहिः कृत्वा जलमापूर्य निर्मलम्॥ ३२

---

1. A,B: नीराञ्जनस्य 2. for समक्षे 3. A,B: रजित॰ 4. A,B: पन्नागं

प्लवोत्सवार्थं पद्मायाः बलभद्रानुजस्य च।
गोविन्दस्य विहारार्थं सीतायाः पतिना सह॥ ३३

पूजानिमित्तं पद्मायाः पङ्कजोत्पत्तिहेतवे।
बहुद्रव्यं व्ययित्वाशु[1] पुण्यतीर्थसरोवरम्॥ ३४

लक्ष्म्याह्लादकरं कृत्वा पूजाकालेऽप्यहर्निशम्।
लक्ष्म्यालयं वाद्यघोषमङ्गलापूरितं कृतम्॥ ३५

नवरत्नमयं दिव्यकण्ठभूषादिकं महत्।
विष्णोः प्रियायाः सदृशममूल्यान्यम्बराणि च॥ ३६

प्रत्यब्दं दापयन् प्रीत्या भक्तिश्रद्धासमन्वितः।
श्रीपुर्यां चोत्तरे भागे तटाकनिकटस्थले॥ ३७

जनमेजयराजर्षेः प्रसन्नाय महात्मने।
लक्ष्मणेन सह भ्रात्रा कैकेय्याः प्रियकारिणे॥ ३८

श्रीमते रघुवीराय सेतुनिर्माणकारिणे।
सर्वास्त्रशस्त्रसंपन्नसाधुसंपत्प्रदायिने॥ ३९

जानकीप्राणनाथाय जगद्रक्षणकाङ्क्षिणे।
सच्चिदानन्दरूपाय सदा मङ्गलकारिणे॥ ४०

दुष्टराक्षसनिघ्नाय चारुकोदण्डधारिणे।
गाम्भीर्यौदार्यदाक्षिण्यकल्याणगुणसिन्धवे॥ ४१

---

2. A,B: व्रयि°

चतुःषष्टिकलापूर्णविद्यानिवहशालिने।
सर्वलोकशरण्याय साधूनां पतये प्रभुः॥ ४२

नवीनस्यन्दनं कृत्वा सर्वालङ्कारशोभितम्।
लोकाभिरामं श्रीरामं सीतालक्ष्मणसंयुतम्॥ ४३

देवदेवं रघुपतिमयोध्यापुरनायकम्।
रथमध्ये समावेश्य सर्वापूपैः समं हरेः॥ ४४

निवेदनं कारयित्वा नीराजनमतःपरम्[1]।
दिव्यसिंहासनासीनं दिव्यस्रग्वस्त्रभूषितम्॥ ४५

जानकीलक्ष्मणाभ्यां च शोभितं रघुनायकम्।
संसेव्यासौ सभामध्ये संतुष्ट्वार्यैः समं जनैः॥ ४६

रथयात्रां प्रकुर्वन्तं रामं राजीवलोचनम्।
नमज्जनानां सर्वेषामाह्लादमकरोत् प्रभुः॥ ४७

उत्सवान्तेष्ववभृथं कारयित्वा श्रियःपतेः।
महानिवेदनं चाशु बृहद्रामस्य संनिधौ॥ ४८

*महानिवेदनप्रभावमाह।*

हानुभावचोदितं महोदनेन संयुतं
हाज्ञया समीकृतं महाजनैरनुष्ठितम्।
मतान्तरैः सुपूजितं महोन्नतेन शोभितं
महात्मने समर्पितं महानिवेदनं कृतम्॥ ४९

1. A,B: नीराञ्जन°



Kodaṇḍarāmasvāmī Temple (p.20, 149)

सुमार्दवेन संयुतं सुभोग्यवस्तुसंमितं
सुसर्षपेन मिश्रितं सुगन्धतैलवासितम्।
सनारिकेलभूषितं सुबाह्लिकैर्विराजितं
सुवर्णकान्तिसंयुतं सुपर्वराजवत्कृतम्॥ ५० 

समानतिन्त्रिणीयुतं समग्रसैन्धवान्वितं
सतां मनोनुरञ्जकं सभाजनैर्विराजितम्।
सहस्रबाहुभूषितं सहस्रधा प्रकाशितं
समन्ततः प्रकल्पितं सदा यशस्करं कृतम्॥ ५१

विमानं गोपुरं सम्यक् कारयित्वा महानसम्।
प्राकारसहितं चार्थव्ययं[1] कृत्वा श्रियःपतेः॥ ५२

गर्भे गृहे च रामस्य रात्र्यां पुष्कलतण्डुलम्।
मरीच्या सहितं चान्नं प्रत्यहं कृतवान् प्रभुः॥ ५३

बहिः कांस्यमयीं घण्टां महाध्वनिसमन्विताम्।
दीपस्तम्भद्वयं चास्य दीपाराधनसाधकम्॥ ५४

*श्रीस्वामिपुष्करिणीप्रभावमाह।*

शेषाचलेऽस्मिन् ग्रीष्मर्तौ पुष्करिण्यां[2] दिने दिने।
तीर्थसंकोचवैरूप्यदर्शनाच्च मनोजयात्॥ ५५

धैर्यमालम्ब्य चायुष्मान् मासषट्केषु कर्दमम्।
सरोवराद्बहिर्नीतं शताधिक्यजनैश्चिरात्॥ ५६

---

1. A,B: चार्थव्रयं

2. A,B: पुष्करण्यां

मार्गादिमण्टपद्वारभरितं घनकर्दमम्।
पर्वताकारपतितं मृद्राशिं वीक्ष्य मानवाः॥ ५७

किमद्भुतं किमाश्चर्यं कर्ता चासीद्दृढव्रतः।
श्रीनिवासस्य कृपया धैर्यमालम्ब्य शाश्वतम्॥ ५८

सरोवरस्य कैङ्कर्यं देवतैरपि दुर्लभम्।
कृत्वा चाद्य यशःकामः प्राप्नोति फलमुत्तमम्॥ ५९

इत्यन्योन्यं समेत्याहुः वीक्षामोक्षावहा भवेत्।
वीथीषु विद्यमानान् तान् मृद्राशीन् वीक्ष्य नायकः॥ ६०

शकटाद्यैर्बहिर्नीत्वा यथावत् कुरुते महीम्।
प्रकटीकृततीर्थेषु प्रभावो दृश्यते नृणाम्॥ ६१

सरोवरे तु विमलेऽप्यासीदत्यद्भुतं किल।
स्वामिपुष्करिणीमध्ये[1] कासारद्वयमास्थितम्॥ ६२

एकं वाराहकं नाम चान्यं स्वामिसरोवरम्।
दक्षिणे स्वामिसरसि तीर्थषट्कं प्रकाशते॥ ६३

भूदारस्य सरोमध्ये कासारत्रितयं तथा।
मिलित्वा नव कासाराः युगान्ते मुनिभिः कृताः॥ ६४

षट्षष्टिकोटितीर्थानां प्रभावस्तत्र दृश्यते।
पुष्करिण्याश्च[2] माहात्म्ये श्रूयन्ते किल यानि च॥ ६५

---

1. A,B: °ष्करणी°

2. A,B: °ष्करण्याश्च



The Vārāhaka-kāsara in the Svāmipuṣkariṇī (p. 150)

थोक्तानि युगेऽस्मिन् पर्वतेऽत्र च।
र्थानि दृष्टानि देवखातसरांसि च॥ ६६

देशोदितानि सरसां नामानि वाच्यान्यहो
मघापहं च यमराट्तीर्थं च वासिष्ठकम्।
न् ऋणमोचनं पवनजं स्याद्वायुतीर्थं सदा
धनदं च गालवसरस्वत्योश्च तीर्थं क्रमात्॥ ६७

करं च पापशमनं संघातवैकल्यकं
करं निवर्तितऋणं कैवल्यसंधायकम्।
क्तिफलप्रदं च महतीं विद्यां च तीर्थान्यहो।
न्जनकर्मतः प्रतिदिनं कुर्वन्ति तीर्थे क्रमात्॥ ६८

तीर्थेषु स्नानं कृत्वा द्विजोत्तमः।
दुद्भवां श्वेतमृत्स्नां संगृह्य धारयन्॥ ६९

द्यनुष्ठानं कृत्वा पापानि मूलतः।
तीर्थवर्येषु यथावत् तर्पणादिकम्॥ ७०

न्निवृत्याशु बन्धुमित्रादिभिः सह।
गं देवं नमस्कृत्य द्विजोत्तमः॥ ७१

दक्षिणं कृत्वा श्रीनिवासं परात्परम्।
च देवेशं यतिराजं च भक्तितः॥ ७२

स्वीकृत्य पूर्णमानन्दमादरात्।
नवाप्नोति कलावपि न संशयः॥ ७३

सरोवरेषु तीर्थेषु पूरितेषु कथंचन।
सौम्यवर्षे प्रोष्ठपद्यां त्रयोदश्यां भृगोर्दिने॥ ७४

विष्ण्वर्क्षे शुभवेलायां भक्तैर्भागवतैः सह।
अमूल्यवस्त्राभरणैर्डोलायां समलंकृतम्॥ ७५

यतिवर्यैः समानीतपुष्पमाल्यैरलङ्कृतम्।
श्रीभूभ्यां सहितं विष्णुं श्रीनिवासं परात्परम्॥ ७६

मध्ये तटाकं प्रावेश्य मण्टपे शुभदर्शने।
मुक्तामणिभिराबद्धशिरोभूषाद्यलंकृतम्॥ ७७

निवेद्य भक्ष्यभोज्यादीन् देवभोज्यफलादिकान्।
वैष्णवादिवरिष्ठेभ्यो प्रीत्या दत्वा यथाक्रमम्॥ ७८

भक्त्या समीपं प्राप्तस्य धार्मिकस्य विरागिणः।
भगवानथ संतुष्टो भुक्तपीताम्बराणि च॥ ७९

बहुमानं चकाराशु चक्रवर्ती भवेदयम्।
पश्चाद्धिरण्यदानानि स्वयं प्रायान्महात्मनाम्॥ ८०

उपत्यकायां शेषाद्रेः श्रीपुर्यां तु विशेषतः।
व्यालये गोपुरस्य शैथिल्यं वीक्ष्य योगिराट्॥ ८१

घनेष्टिकां कोटिसंख्यां क्रीत्वा[1] भृत्यैः सुधामपि।
मर्दयित्वा बहुजनैः संघीभूय शताधिकम्॥ ८२

---

1. A,B: व्रीत्वा



Mahāgopura at the Govindarajasvāmī Temple (p.152)

प्रयासेन समारुह्य गोपुरं शिथिलीकृतम्।
अस्य चाग्नेयदिग्भागे इभतुल्यं महाद्भुतम्॥ ८३

बिलं[1] दृषद्भिरापूर्य सुधालेपनमिश्रितम्।
केचिद्दारुशलाकैश्च जीर्णबिम्बान्यनेकशः॥ ८४

गोपुरस्याग्रभागेऽस्मिन् भगवत्सदृशानि च।
एकादश नवीनानि कलशानि कृतान्यहो॥ ८५

पयोमिश्रसुधाभिश्च गैरिकाद्यैश्च चित्रितम्।
गोपुरं चाद्भुतं कृत्वा द्रष्टृणां फलमुत्तमम्॥ ८६

विष्णोर्दिव्यविमानानि गोपुराणि जगत्पतेः।
दृष्टमात्रेण यो विद्वानञ्जलिं कारयेत् सदा॥ ८७

एवं बृहद्गोपुरस्य जीर्णोद्धारणहेतवे।
बहुसाहस्रिकं द्रव्यं व्ययं[2] कृत्वा श्रियःपतेः॥ ८८

गोपुरस्य च कैङ्कर्यं प्राप्य लोकप्रकाशकम्।
संतुष्टोऽभूत् सदा श्रीमान् सर्वेषामाशिषां बलात्॥ ८९

यावत्स्थास्यति गोपुरं क्षितितले गोविन्दपुर्यां स्थिरं
श्रीशैलेशधनव्ययाद्विरचितं[3] कर्तुर्यशोवर्धकम्।
तत्प्रीतिं नगरे सदा स्थितिजुषामाकल्पयन् श्रीमतां
सप्तद्वारनिबन्धनेन गगनोल्लासं समीकुर्वते॥ ९०

---

1. A,B: बलं 2. A,B: व्रयं 3. A,B: °नव्रया°

विष्ण्वालयान्तरे पश्चादायुष्मान् भक्तिमानसौ।
गोपुरद्वितयं जीर्णं दृष्ट्वा निर्माणकारणात्॥ ९१

घनेष्टिकानां प्रयुतं विविधाकारशोभितम्।
सुधाभिः सहितं क्रीत्वा प्राकारं च महानसम्॥ ९२

गोपुरद्वितयं सम्यक् कारयित्वा श्रियःपतेः।
आलयस्याग्रभागेऽस्मिन् विमानं चतुरश्रमम्[1]॥ ९३

सुधामयैर्वेदसंख्यैः कलशैरुपशोभितम्।
तन्निमित्तं बहुद्रव्यं व्ययं[2] कृत्वा श्रियःपतेः॥ ९४

गोविन्दपुष्करिण्याश्च पूर्वपश्चिमरोधसि।
अत्युन्नतचतुःस्तम्भमण्टपद्वितयोपरि॥ ९५

विमानं वर्तुलाकारमुच्चस्थमपि शाश्वतम्।
सुवर्णकलशाभ्यां च भूषितं मण्टपद्वयम्॥ ९६

अधुनापि विहारार्थं डोलाकर्मणि शार्ङ्गिणः।
वसन्तकाले संप्राप्ते तयोरत्यद्भुतोत्सवम्॥ ९७

प्रतिवर्षं त्र्यहं कृत्वा उपचाराननेकशः।
पश्चाच्चतुर्थदिवसे सुवर्णमुखरीतटे॥ ९८

पुन्नागवृक्षसंभूतकुल्यामूले महाह्रदे।
अगस्त्याश्रमसामीप्ये महर्षिजनसेविते॥ ९९

---

1. for चतुरश्रम्

2. A,B: व्रयं

मध्येह्रदं विहारार्थं जलक्रीडोत्सवं हरेः।
आलयस्याङ्कणे[1] रम्ये चतुरश्रममण्टपे[2]॥ १००

नववाद्यसमुद्भूतगानसेवामहर्निशम्।
श्रीनिवासाय महते गोविन्दाय महात्मने॥ १०१

जानकीप्राणनाथाय पद्मायै प्रियकाम्यया।
कुर्वन्नसौ महानन्दं श्रीपुरीमधिवासिनम्॥ १०२

गोविन्दधामनिकटस्थितभूमिभागे[3]
गोदामनःप्रियतमस्य रघूत्तमस्य।
क्रीडावनं विरचितं बहवो विहर्तुं
वापीत्वनेन बहुनिर्मलतोयपूर्णा॥ १०३

परीधाव्यब्देऽस्मिन् द्रविडविषये वेङ्कटगिरौ
पुरा स्वोच्चस्थानाद्धरगरुडमुख्यैरनुगतम्।
वसन्तं श्रीवासं प्रकृतममुना कारितमणि–
प्रभाकान्तिः श्रीशं निलयमधुना शोभयति तम्॥ १०४

तत्पुरोवर्तिनोऽनन्तमूर्तेरधः
पद्मपीठान्तिके रौप्यवर्णाकृतेः।
सन्मुहूर्ते त्वयं भोगमूर्तेर्जडी–
बन्धनं चाकरोच्छ्रीनिवासाज्ञया॥ २०५

वृषाद्रिशिखरेशितुर्मकरतोरणस्थापने[4]
निकेतनमशोभत प्रचुरहोमधूमैः समम्।
मखोपमसुरक्रियासहितसूरिविद्वज्जनैः
प्रकाशति दिशामुखेष्वमितदानचर्यारवः॥ १०६

1. A,B: °स्याङ्गणे 2. for °श्रमण्टपे 3. A,B: °न्ददाम° 4. A,B: °रशतु°

ऋग्वेदप्रभृतीन् तदङ्गमनिशं दिव्यप्रबन्धं सदा
वेदव्यासमुखोदितानि वसुदिक्संख्यापुराणानि च।
भेरीकाहलशङ्खदुन्दुभिरवैः साकं पठन्ति द्विजाः
विष्णुं विष्णुपदे स्तुवन् बहुतरं ब्रह्मादयः सर्वदा॥ १०७

महाद्विजान्नभोजनं महीतले महाद्भुतं
महोत्सवद्वये कृतं मठेषु मन्दिरेषु च।
महानुभावचोदितं मनाग्जनैरयाचितं
ममेति नामवर्जितं महात्मभिः सुपूजितम्॥ १०८

मतान्तराभिमानितं महाज्यधारया युतं
महामरीचिवर्जितं मधुद्रवैः समेधितम्।
महारसैर्विमिश्रितं महादधिप्रपूरितं
महाजनैरनुष्ठितं महद्विलक्षणं कृतम्॥ १०९

तदीयाराधनं वैष्णवास्त्वब्रुवन्
तदेतत् प्रस्तुतं द्वैतमुख्या जनाः।
तदद्वैतवादाः समाराधनं ते
वादयन्तस्त्रिधा तोषयन्ति स्म तम्॥ ११०

यदा स्वर्णवर्षं भृशं वेङ्कटाद्रौ
प्रविश्य प्रजानां प्रकाशं चाकरोत्।
गृहे धान्यरूपैस्तनौ वस्त्ररूपै-
र्द्विजानां वधूटीषु भूषासहस्रैः॥ १११

तत्तद्देशादागता भूसुरास्ते
भक्त्या नित्यं श्रीनिवासं प्रणम्य।
श्रेयोवृद्धिं चोत्सवं श्लाघयित्वा
सर्वान् कामानाप्नुवन्नेतुरिष्टात्॥ ११२

सेवादासमहन्तुनामकविभुः श्रीवेङ्कटेशाज्ञया
श्रीमद्वेङ्कटलक्ष्मणार्यगुरुभिः प्राज्ञैः समं चार्चकैः।
कैङ्कर्यद्वयमद्भुतं मतिमतां कृत्वा प्रियं श्रीपतेः
कौशेयादिसुवर्णदानमकरोद्भक्त्या सतां प्रीतये॥ ११३

कृपारससमुद्भवं भगवतः प्रभावान्वितं
चरित्रमिह शृण्वतां भवति सर्वसौख्यं सदा।
कदाचिदपि यः पुमान् पठति चेत्तदानुग्रहं
लिखेद्यदि[1] च भक्तितः सुखमुपैति देवार्चितम्॥ ११४

ब्रह्मक्षत्रियवैश्यशूद्रकुलजाः श्रीवेङ्कटाद्रिं गताः
प्राप्यं नेत्रमहोत्सवद्वयमिदं श्रीश्रीनिवासस्य ये।
आसेव्याघसमुच्चयाद्विरमतिं संप्राप्य भक्त्याधिका-
श्चायुर्वृद्धिमतिश्रियं सुतनयान् संप्राप्नुवन्ति ध्रुवम्॥ ११५

श्रीशैले करिशैलनायकमणिः श्रीवेङ्कटेशालये
पूर्वं चादिवराहविष्णुसहितो नाम्ना नृसिंहेन सः।
श्रीभूम्यां सहितं श्रियःपतिमिमं द्रष्टुं सदा सन्मुखः
काञ्च्यां हस्तिगिरेः प्रभावमधिकं मत्वा स एवाबभौ॥ ११६

सिंहाचलादिह गतस्य हरेः सपर्यां
कृत्वा श्रियःपतिरसौ परितोषितोऽभूत्।
श्रीहस्तिशैलममृताम्बुनिधिं विहाय
हेमाद्रिमिच्छतवतोः पुरतोऽन्नपूर्णाम्॥ ११७

---

1. A,B: °द्यपि

पुरा शङ्कणाख्यः प्रभुर्ज्ञानभक्त्या
युतः श्रीधरस्याकरोदालयं च।
तदा स्वप्नबुद्धां परं देवराज-
प्रतिष्ठामकार्षीदगारं तदीयम्॥ ११८

पुराकृततदालये शिथिलिते त्वयं योगिराट्
प्रकल्प्य पुनरालयं करिगिरीशविष्णोः स्थितिम्।
सुवर्णकलशान्वितं सुकृतकोटिनाम्नार्चितं
विमानमचिराद्धरेरतिमुदं विधत्ते सताम्॥ ११९

प्रमादीचवर्षे[1] महन्त्वाख्ययोगी
मठे राजधान्यां महार्हं किरीटम्।
हरेः कारयित्वा दिनान्ते प्रतोल्यां
गजे संनिवेश्य प्रकाशं प्रकुर्वन्॥ १२०

समं वाद्यघोषैरथ प्रोष्ठपद्यां
गिरौ शुक्रवारे रमानायकस्य।
किरीटं समर्प्यान्नपूर्तिं च विष्णोः
हिरण्यं बुधानामकार्षीत् प्रकामम्॥ १२१

पुरा खलु युगान्तरे मकुटरत्नभूषा हरेः
महार्हमणिरञ्जिता कृतयुगे विधात्रार्पिता।
तदाभरणमस्य यच्छिथिलितं यदाभूदसौ
ततोप्यधिककान्तिमन्मकुटमर्पयद्धार्मिकः॥ १२२

1. i.e. 11-4-1853 to 11-4-1854

गिरौ मनुर्युगान्तरे महत्किरीटमादरात्
सुवर्णरत्नशोभितं शिरः प्रकाशकं हरेः।
समर्प्य तत्कृपावशात् समुद्रवेष्टितां महीं
प्रकाशयन् स्वतेजसा सुराधिपो बभूव सः॥ १२३

कलौ यतीनां प्रवरः श्रियःपतेः
अङ्गेषु नागाभरणान्यनेकशः।
आकाशराजः[1] स्वयमच्युतस्य
किरीटमत्युन्नतमर्पयत् सकृत्॥ १२४

आनन्दवर्षेऽखिलयोगिराट् प्रभुः[2]
सदाञ्जनेयप्रतिमाद्वयस्य।
मठान्तिके चोत्तरवीथिमध्ये
मुदा प्रतिष्ठामकरोत् तदालयम्॥ १२५

तद्वेश्मनि श्रीपतिमाविवेश्य
तस्य प्रसादं च निवेदयित्वा।
तत्रागतानां द्रविणं च दत्वा
तदाधिभूराशिषमाप तेषाम्॥ १२६

राक्षसवर्षे[3] राजगुणाढ्ये
रत्नकृताद्रौ रम्यसभायाम्।
श्रीशपदाब्जद्वयशठकोपं
कृतवानधिभूस्तप्तसुवर्णात्॥ १२७

---

A,B: °राजा
i.e. 11-4-1854 to 11--4-1855
3. i.e. 12-4-1855 to 11-4-1856

पुरा श्रीशैलेऽस्मिन् कनकशठकोपाकृतिरियं
कलौ मोक्षं दातुं निवसति चिराच्छ्रीशनिलये।
नृणां मूर्ध्न्याकर्षादधिकनमनं प्राप्य बहुधा
प्रपत्तिं संप्रायात् प्रथितनलिनाक्षस्य पदयोः॥ १२८

श्रीशैलेऽस्मिन् यतिराट्-
च्छ्रीशठकोपं समर्प्य तुष्टोऽभूत्।
श्रयताममृतं दातुं
श्रमवारिनिधौ प्रविष्टचित्तानाम्॥ १२९

विष्णोः श्रीशठकोपरूपकनकश्रीपादपद्माकृतेः
संकोचं समवीक्ष्य तत्प्रतिकृतिं कृत्वा समर्प्याददात्।
आनन्दाम्बुनिधौ विगाह्य कृपया सौवर्णपीताम्बरं
नव्यं कर्तुमिहेच्छति प्रभुरयं प्रायो नले[1] वत्सरे॥ १३०

नराणां वृषाद्रौ नवीनः शठारिः
मुनीनां शिरांसि स्पृशित्वा त्रिकाले।
शरीराण्यजस्रं पवित्राणि कुर्वन्
ममाप्युत्तमाङ्गं कदालंकरोति॥ १३१

सुरटीमकरोदधिभूः
सूर्यनिकाशां सुवर्णकलशाग्राम्।
सुतरां मुक्तामणिभिः
सुमनोगुच्छैः सुपूजितामन्तः॥ १३२

---

1. i.e. 11-4-1856 to 10-4-1857

विष्ण्वातपत्रद्वयमध्यभागे
वीथीषु वर्षातपवारणार्थम्।
विष्णोः पुरा चात्मभुवा कृतेयं
विद्योततेऽद्रौ प्रभुणा प्रकल्पिता॥ १३३

सुवर्णपीताम्बरजालकामृता
सुराधिपेनादृतसुन्दराकृतिः।
सदा कलापूर्णहिमांशुवर्तुला
सभासु विष्णोः पदमेत्य नृत्यति॥ १३४

अब्देऽस्मिन्नलनामके प्रभुरयं सत्रद्वयं शाश्वतं
कृत्वा श्रीपतिमाविवेश्य सदने संतोष्य सद्भिः समम्।
भक्त्या भारतपर्वसर्वसुकथां श्रुत्वा पुराणान्तरं
कुर्वन्नत्र मतत्रयस्थमनुजाभीष्टं करोत्यन्वहम्॥ १३५

सत्रद्वयं साधुजनावतंसं
समीकृतं सत्रभुजां नराणाम्।
सकृन्निवासार्थमपेक्षितार्थैः
समीपकासारजलेन पूतम्॥ १३६

पेङ्गलनामकवर्षे[1]
[प्र]भुरन्यानि सुवर्णरूषितानि।
[य]ानानि कारयित्वा
[गो]विन्दाय समर्पयिष्ये[2] स्म॥ १३७

[1] i.e. 11-4-1857 to 11-4-1858
[2] Ungrammatical form for समर्पयति

दिव्यामाशिषमादरादधिकृतैः साकं प्रभुः प्रार्थय-
न्नायुर्वर्षशतं प्रभुत्वविभवैः शिष्यैः समं स्थास्यति।
श्रीमान् शिष्यपरंपरासु विभवं कैङ्कर्यरत्नावलेः
ग्रन्थान् कारितवान् शिलाक्षरगणैर्लोकोपकाराय च॥ १३८

जीर्णानि कैङ्कर्यकदम्बकानि
नवीकृतान्यानि[1] करिष्यतेऽत्र।
प्रभुः प्रहर्षाद्गरुडध्वजस्य
धनं व्ययित्वा[2] भुवि वज्रपाणिः॥ १३९

*श्रीवेङ्कटाद्रौ श्रीनिवासस्य धर्मकर्तुर्बृहद्व्रतेः कैङ्कर्याधिकारप्रभावं वर्णयति।*

श्रीमद्वेङ्कटलक्ष्मणार्ययतिराट्च्छ्रीवेङ्कटाद्रावधः
प्राग्विश्वावसुवत्सरे[3] कृतमठे श्रीवासमाराधयन्।
वेदक्ष्माभृदहार्यविग्रहशके (१७७४) श्रीशेषशैलेऽप्यसौ
सीतावल्लभराघवस्य च मठं कृत्वा तमाराध्यति॥ १४०

महीतले महस्थले महागिरावधःस्थले
महात्मनां मनोहरं मठद्वयं महादृढम्।
मनीषया प्रकल्पितं महात्मभिः सुपूजितं
महद्धनव्ययात्[4] कृतं महात्मने समर्पितम्॥ १४१

महान् यतिवरः सदा वृषगिरीशगोविन्दयो-
र्महार्हमणिरञ्जिताभरणकोटिसंख्याधिपः।
अशेषजतुमुद्रिकाभरणलेखनप्रक्रिया-
विभुत्वमिह चावहन्नपचितिं करोति स्वयम्॥ १४२

---

1. for नवीकृतानि यानि
2. A,B: व्रयित्वा
3. i.e. 11-4-1845 to 11-4-1846
4. A,B: °नव्रयात्

श्रीशोत्सवे चामरछत्रचौरी-
वेत्रद्वयालंकृतवाद्यशब्दैः ।
दिवानिशं द्राविडवेदघोषै-
र्युक्तः स्वगोष्ठ्यां चरति प्रसिद्धः॥ १४३

*स्वमठे कृताध्ययनोत्सवविभवमाह।*

अध्यैनोत्सवमादराद्यतिपतिः श्रीवेङ्कटाद्रावधः
श्रीपुर्यां प्रतिवत्सरं प्रकटयन् सीतापतेरग्रतः।
श्रीवासस्य च विष्णुचित्ततनयाद्याचार्यगोष्ठ्यां बुधैः
श्रीमद्द्राविडवेदसारफणितीरध्याप्य चामोदते॥ १४४

श्रीमानत्र महोत्सवे वृषगिरौ श्रीवैष्णवाराधनं
मध्याह्ने कृतषड्रसैर्विरचयन् मृष्टान्नपूर्त्यान्वहम्।
रात्र्यामन्नचतुर्विधं[1] पृथगसौ कृत्वाथ भक्ष्यादिकं
श्रीवासाय निवेद्य वाद्यसहितं नीराजनं कारयन्॥ १४५

तीर्थं दत्वा स्वगोष्ठ्यां तदनु यतिपतिः गन्धताम्बूलपुष्पं
पश्चादभ्यूषदोशाः घृतगुडमिलितं मुद्गपूर्णं सुभक्ष्यम्।
माषापूपं च रम्यं विविधरसयुतापूपवृन्दं प्रसादं
सर्वेषां दापयित्वा दशदिवसमसौ मोदते सूरिवर्यैः॥ १४६

तस्मादस्मिन् वृषाद्रौ विभवमनुकलं श्रीनिवासाय कुर्वन्
चातुर्मास्याननेकान् प्रतिशरदमिमं चोत्सवं श्रीधरस्य।
श्रीपुर्यां वैष्णवानां मुदमतिकलयन् ज्ञानबोधाच्च लोके
स्थास्यत्यस्मिन् यतीनां प्रथितगुणयशाः भाष्यकारावतारः॥ १४७

---

1. Compound for metre

बृहद्योगिवर्यः पुरे पर्वतेऽस्मिन्
नृणां मुक्तिदः सन् मठान् कारयित्वा।
स्थिरानन्दवर्षे रथस्योपकण्ठे
बृहत्सत्रमन्यच्चकाराध्वगानाम्॥ १४८

*श्रीकाञ्च्यां देवराजस्य पूर्वम् अद्य च बृहद्यतेः कैङ्कर्यमाह।*

काञ्चीनगर्यां कलहंसयानं
श्रीदेवराजस्य च मङ्गलं गिरिम्।
यानद्वयं रौप्यसुवर्णरूषितं
समर्प्य सत्कीर्तिमगाद्यतिः पुरा॥ १४९

अतोऽधिकं वेङ्कटलक्ष्मणार्यः
शालङ्क्षिणर्तीर्थममुष्य[1] विष्णोः।
आराधनार्थं परिकल्प्य विप्रै-
राशागतां कीर्तिमुपैति नित्यम्॥ १५०

*श्रीपुर्यां वरवरमुनिना निश्चितयतीश्वरप्रभावं श्लोकचतुष्टयेनाह।*

पुरा कश्चिद्योगी वरवरमुनेः पूर्णकृपया
यतिः प्रादुर्भूत्वा यतिपतिसहायं प्रकटयन्।
वृषाद्रौ श्रीपुर्यां विपुलमठमासाद्य विभवाद्
विभुत्वात् कैङ्कर्यं वृषगिरिपतेरत्र कुरुते॥ १५१

तनुस्वामी श्रीमान् तनुमठमुदग्रं प्रकटयन्
अमुष्मिन् श्रीवासं प्रतिदिवसमाराध्य विभवात्।
तपस्वी तत्त्वार्थान् तनुमतिमतां बोधितुमसौ
विदेशे संचारं कलयतु विपश्चिद्यतिपतिः॥ १५२

1. A,B: शालङ्क्षणर्°

वरवरमुनिसंकाशः
वरगुणशिष्यैर्वरिष्ठभूपालैः।
वरयतिसततं यतिराट्
वारिजनेत्रकृपावशाद्भूम्याम्॥ १५३

श्रीपुर्यामुपविश्य सर्वविभवैः पूर्णो यतीन्द्रः पुनः
श्रीरामानुजयोगिवर्यकृपया श्रीवासमाराधयन्।
अत्रत्यान् करुणारसेन मनुजान् ज्ञानाधिकान् रक्षितुं
कालक्षेपविशेषमत्र कलयन्नायुःशतं स्थास्यति॥ १५४

*अनन्तरमत्रत्यानामाचार्यपुरुषाणां प्रभावमाह।*

प्राज्ञाचार्यवराः समेत्य बहवः श्रीवेङ्कटाद्राविह
श्रीगोविन्दकृपावशादनुदिनं कैङ्कर्यरूपां श्रियम्।
संप्राप्यात्र विशेषतो जनपदे सच्छिष्यवर्गान् सदा
ज्ञानान्मोक्षपथं नयन्ति कृपया सप्तर्षिमान्याः स्थिताः॥ १५५

अध्यायानां चतुर्णाममितहरिकथां शृण्वतां विष्णुभक्तिं
विज्ञानं वैष्णवानां विभवमधिकृतां वीर्यशक्तिं प्रभूणाम्।
आयुर्वृद्धिं समग्रां श्रियमधिकफलान्यन्वहं पाठकानां
सत्पुत्रान् लेखकानामरिषु च विजयं श्रीनिवासो ददाति॥ १५६

*अस्य वेङ्कटाचलस्य चतुर्युगेषु महर्षिभिः प्रोक्तमुख्यनामान्याह।*
*वेङ्कटाचलमाहात्म्यवचनानि निरूप्यन्ते।*

मुख्यानि नामानि यथाच्युतस्य
तथा महाद्रेः कथितानि सद्भिः।
नाम्नां फलं मुख्यतया युगेऽस्मिन्
द्विजातिवर्णस्य फलं भवेत् सदा॥ १५७

कृते वृषाद्रिं प्रवदन्ति सन्तः
त्रेतायुगेऽस्मिन् गरुडाचलं च।
ते द्वापरे शेषगिरिं वदन्ति
तं वेङ्कटाद्रिं च कलौ युगेऽस्मिन्॥ १५८

*श्रीवेङ्कटेशमाहात्म्यश्रवणफलादीनि प्रोच्यन्ते।*

श्रीवेङ्कटेशमाहात्म्यं यः शृणोत्यपि वासकृत्।
सर्वपापैर्विनिर्मुक्तः सर्वश्रेयोनिधिर्भवेत्॥ १५९

श्रीवेङ्कटेशमाहात्म्ये श्लोकं वार्धं च भक्तितः।
पादं वाप्यक्षरं वापि यः पठेच्छृणुयात् सदा॥ १६०

ब्रह्महत्यासहस्राणि तथा पातकसंचयम्।
उपपातकमुख्यानि निर्दहेत् सूर्यवह्निमम्॥ १६१

श्रीवेङ्कटेशमाहात्म्यं वाचकं यस्तु पूजयेत्।
तस्य श्रीवेङ्कटेशस्तु पुत्रपौत्राभिवृद्धिदः॥ १६२

श्रीवेङ्कटेशमाहात्म्यं वाचकं योऽवमन्यते।
मूको भवति चण्डालः श्वानयोनौ च जायते॥ १६३

वेङ्कटाचलमाहात्म्यं यस्य गेहे प्रवर्तते।
आयुरारोग्यमैश्वर्यमन्ते विष्णुपदं लभेत्॥ १६४

श्रीनिवासस्य कैङ्कर्यं यो ब्रूयाच्छ्रूयते कलौ।
ऐहिकामुष्मिकफलं लभते नात्र संशयः॥ १६५

श्रीशैलपुर्याममुना पुराकृतं
उपत्यकायां च विशेषमादरात्।
कैङ्कर्यबृन्दं कलितं सतां मुदे
तथा प्रवन्धश्च विशेषतो भवेत्॥ १६६

कृपारससमुद्भवं भगवतः प्रभावान्वितं
चरित्रमिह श्रुण्वतां भवति सर्वसौख्यं सदा।
कदाचिदपि यः पुमान् पठति चेत् तवानुग्रहं
लिखेद्यपि च भक्तितः सुखमुपैति देवार्थितम्॥ १६७

देवी[1] दृग्विषशैलनाथकरुणासन्दोहदुग्धाम्बुधे[2]–
र्भूत्वा स्वाश्रितकल्पितार्थविततिर्लक्ष्मीपतेः[3] सेवया।
तस्याः[4] प्राकृतपद्यकिङ्करकथामाध्वीं वहन्तो[5] दिश–
न्त्वध्यायस्तबका गुणाः सुमनसां श्रोत्रेषु भूषाश्रियम्॥ १६८

*॥इति श्रीवेङ्कटाद्रौ वेङ्कटेश्वरमाहात्म्यप्रतिपादक–*
*कैङ्कर्यरत्नावलिग्रन्थे देवालयेषु रथमण्टप–*
*गोपुरप्राकारादिजीर्णोद्धारणकैङ्कर्यकथा*
*नाम चतुर्थोऽध्यायः॥*

---

1. This verse occurs thrice in this book as 1.155; 4.168 and 6.174 with variants; 1.155, 4.168: देव–
2. 1.155; 4. 168: दृवृष°; 6.174: दृर्वृष°
3. 1.155; 6.174: भूत्वाप्याश्रितसंचितार्थ°
4. तस्या in all places
5. 6.174: वशून्तो

## पञ्चमोऽध्यायः[1]

*श्रीरङ्गादिदिव्यक्षेत्राणां[2] प्रभावं च पुण्यनदीनां प्रभावं च वर्णयति।*

श्रीरङ्गादिमहास्थलेषु वसतिं कृत्वा पुरा योगिनः
पूर्वाचार्यवराः यतीश्वरमुखाः लोकान् पुनीतुं सदा।
तत्तद्विष्णुपरायणं च बहुधा कृत्वा प्रबन्धात्मना
तिष्ठन्त्यत्र च शेषशैलनिकटे श्रीवाससेवापराः॥ १

पूर्वाध्यायचतुष्टये हरिकथां श्रुत्वात्र शेषाचले
संतुष्टाप्यपरत्र पुण्यसरितां तीर्थप्रभावं क्रमात्।
विष्णुक्षेत्रऋषिप्रभावमसकृच्छ्रोतुं प्रहृष्टा यदि
वक्ष्येऽहं भवतामनुग्रहबलाद्वाग्देवताप्रार्थनात्॥ २

रत्नाकरान्वितमहोदधिपुण्यसेतो-
र्ध्यानं च दुर्लभममुत्र कलौ जनानाम्।
वीक्षाविचारकथनं कुत एव तेषां
स्नानादिकर्मकरणं च कदा ह्युदेति॥ ३

विष्णुस्थलानि च सरांसि महीपतीना-
मावासभूतनगराणि नदीशतानि।
संवीक्ष्य यानि ऋषिभिः कथितानि श्रुत्वा
वक्ष्येऽहमार्यजनपूर्णकृपाकटाक्षात्॥ ४

श्रीगोविन्दनृपेण पालितपुरे नाथार्यपुत्रः सुधीः
कृष्णाख्यः परवस्तुसंयुतपदः प्राज्ञान् सदा हर्षयन्।
श्रीशैलेशकृपावशात्कतिपयक्षेत्राणि दिव्यस्थला-
न्यालोक्यात्र सुहृज्जनैः परिवृतः सेवाक्रमं वच्म्यहम्॥ ५

1. A,B: श्रीनिवासपरब्रह्मणे नमः। पञ्चमोऽध्यायप्रारंभः। 2. A,B: °क्षेत्र

यात्रायामुषसि स्मरामि मनसा श्रीवेङ्कटेशं सदा
गोविन्दं रघुनायकं शुकपुरे लक्ष्मीं च नारायणम्।
कूरेशं घटिकाचलं करिगिरिं तत्रैव चाष्टादश-
क्षेत्रं वेगवतीं च दुग्धतटिनीं श्रीराघवं देशिकम्॥ ६

श्रीभूतपुर्यां यतिसार्वभौमं
श्रीवैष्णवाराधिततत्कनिष्ठम्।
श्रीशालिहोत्रान्वितरामचन्द्रं
श्रिया समेतं शरणं प्रपद्ये॥ ७

श्रीभक्तिसारं पदपद्मलोचनं
दृष्ट्वाथ गारुत्मतविष्णुमन्दिरम्।
श्रीभूतयोगीश्वरदर्शनं ममा-
प्यासीत् पुरा पूर्णकृपावशाद्गुरोः॥ ८

अब्धिस्थलगतविष्णुं कल्याणाख्यं जलाद्रिनाथं च।
अर्जुनसारथिमारात्त्वहमीडे भक्तवत्सलं रामम्॥ ९

सर्पश्रेष्ठपुरस्थितं सुरपतिं श्रीचित्रकूटेश्वरं
गोविन्दं भवसेव्यमूर्ध्वचरणं नाङ्गूरुकूटाधिपान्।
तत्रैकादशमाधवान्नरहरिं श्रीखड्गपुर्यां श्रितं
श्रीमुष्णे तु वराहमूर्तिमनिशं ध्यायामि मुक्तिप्रदम्॥ १०

श्रीकण्णङ्गुडिमङ्गसंज्ञकपुराध्यक्षं च दामोदरं
चोलाधीश्वरपालितं यदुपतिं श्रीराजमन्नाह्वयम्।
नावूर्नागपुरस्थितं रघुपतिं नानाद्रुमैः संयुता-
नारामानतिचित्रसौधसहितान् पश्यामि चाध्वन्नचहम्॥ ११

तस्मिन् चाध्वनि सैकतेष्वधिकृतान् नानालतामण्टपे-
ष्वासन्नान् मृगपक्षिभृङ्गनिवहान् तेषां रवं श्लाघयन्।
वालूरीश्वरदेवतां तत इतः प्राक्पश्चिमस्थस्थला-
न्यालोक्याद्रिवरान् नदींश्च मनसा ध्यात्वा स्तुवं प्रायशः॥ १२

मनुजेष्टदायिनमुपास्य हरिं
मनसा स्मरामि रघुनाथपुरम्।
नवचापकोटिमुदधौ च सकृ-
न्नलसेतुमप्यघनिवृत्तिकरम्॥ १३

क्रमशः पुरन्दरमहीध्रवरं[1]
क्रतुदक्षयोगिनिवहैः सहितम्[2]।
क्रतुना च यत्सुखफलं लभते
क्रिमिकीटकेषु वितरत्यनिशम्॥ १४

रामेश्वरं दक्षिणसिन्धुभूषणं
रामानुजं राघवमाञ्जनेयम्।
राज्ञा प्रतिष्ठापितमत्र शम्भुना
रत्नैश्च पूजां करवाणि वाङ्मयैः॥ १५

नौकासहस्रं जलधौ गतागतं
सांयान्त्रिकैः संभृतवस्तुसंयुतम्।
दिवानिशं गन्धवहेन चोदितं
प्लवैर्युतं चेत्फलदं भवत्यलम्॥ १६

---

1. A,B: °वरः

2. A,B: सहितः

पुरा दर्भतल्पे स्थितं रामचन्द्रं
सदा योगिबृन्दैः समेतं प्रशान्तम्।
मुदाश्वत्थमूले चिरं गोपबालं
नमाम्यग्रतोऽहं विभोश्चक्रतीर्थम्॥ १७

बृहत्सत्रजाले नृणां सर्वसौख्यं
प्रियं मृष्टमन्नं सकृद्भूसुराणाम्।
फलं तापसानां स्थलं चाध्वगानां
पयोमिश्रतक्रं प्रयच्छन्ति भूपाः॥ १८

नानादेशजनाश्रितान् जनपदान् श्रीदेवराजं यतिं
श्रीवैकुण्ठपतिं च कारितनयं श्रीताम्रपर्णीतटे।
दृष्ट्वा श्रीमधुरं कविं मधुरिपुं तोताद्रिनाथं मठं
पश्याम्यद्य कुरङ्गनामकमहत्क्षेत्राणि सह्याचले॥ १९

अनन्तशयनस्थलं पितृजनार्दनं च क्रमात्
अतीव मलयाचले बहुलदिव्यदेशानहम्।
प्रशस्तमधुरापुरीं तदनु धन्वि नव्यं पुरं
स्मरामि सरितः ह्रदान् विविधवृक्षगुल्मैः समम्॥ २०

शृङ्गारेशधरे श्रिया सह विभुं श्रीनूपुरालङ्कृतं
श्रीरङ्गे परवासुदेवमुपरि श्रीरङ्गनाथं श्रियम्।
कावेरीं च सुधांशुपुष्करिणिकां[1] धीज्ञानमुक्तिप्रदं
लोकाचार्यगुरुं नमामि शतशः श्रीरङ्गयात्राबलात्॥ २१

---

1. A,B: °ष्करणिकां

सत्याचलाधिष्ठितसत्यनाथं
सत्यव्रतानां सकलार्थदायिनम्।
श्रीकुम्भकोणस्थितचक्रपाणिं
श्रीशार्ङ्गपाणिं प्रणतोऽस्मि नित्यम्॥ २२

कपिस्थले स्थितं हरिं करीन्द्रमोक्षदायकं
कवेरकन्यकार्चितं कवीन्द्रयोगिभिर्नुतम्।
निशम्य तं हरिं सकृन्निदाघशान्तिदं नृणां
कदा भजामहे पुनर्वयं कवेरजां नदीम्॥ २३

सारनाथं हरिं सर्वदा मोक्षदं
शौरिराजं विधुं श्रीकरं देहिनाम्।
सौम्यनारायणं सर्वसंपत्करं
सन्ततं चास्तुवं सामगानैः समम्॥ २४

स्थलशयनस्थितविष्णुं
संश्रितयोगं जयासनं देवम्।
सदयं परिमलरङ्गं
साधुजनैः साकमञ्जसा नौमि॥ २५

भूम्यां देवसभानिविष्टमनिशं श्रीमाधवस्वामिनं
वन्द्यं नन्दिपुराधिपं नरहरिं श्रीपद्मनाभाह्वयम्।
हस्तापूपघटप्रवेशितकरं नारायणं नामतः
विख्यातानि सरांसि नाथगुरुणा साकं नमाम्यन्वहम्॥ २६

पाश्चात्यं यदुशैलनाथमनिशं ध्यायामि मुक्तिप्रदं
कल्याण्या सह चाष्टतीर्थममलं कञ्जाक्षहृद्यं सदा।
तत्प्राचीनमहोबले नरहरिं नत्वा पिनाकीतटे
रङ्गेशं हरिशैलमब्धिनिकटे कृष्णानदीं पावनीम्॥ २७

गोदावरीं सप्तनदीस्वरूपां
भद्राद्रिरामं सुकुमारमूर्तिम्।
तदन्तिके मङ्गलशैलनाथं
नृसिंहवक्त्रं मनसा स्मरामि॥ २८

सिंहाचलस्थं च वराहरूपं
नत्वा जगन्नायकमर्थरूपम्।
प्रभोः प्रसन्नं यतिशेखरस्य
श्रीकूर्मरूपं भगवन्तमीडे॥ २९

गङ्गानदीं विष्णुपदाब्जजातां
प्रयागतीरे पुरुषोत्तमं च।
साकेतपुर्यां जनकात्मजायाः
पतिं स्मराम्यन्वहमादरेण॥ ३०

उत्तरमधुरापुर्यां
वसुदेवसुतं नमामि कालिन्दीम्।
गोकुलवर्धनशीलं
गोपवधूटीसहस्रहृच्चोरम्॥ ३१

बृन्दावनगतकृष्णं
द्वारवतीं चापि हस्तिनानगरम्।
पाण्डवकौरवसेनां
तेषां युद्धं स्मरामि कुरुभूम्याम्॥ ३२

बदरिकाश्रमवासिनमच्युतं
तदनु पुष्करधामविलासिनम्।
मधुरिपुं भुवि मानसनामके
सरसि हंसविलासमुपास्महे॥ ३३

[1]-सालग्रामनदीं[2] च गण्डकशिलां-[1] श्रीनैमिशारण्यकं
नत्वा योगिभिरञ्चितं मुरहरिद्वारं प्रणम्यादरात्।
प्रत्यावृत्य सुखेन वेङ्कटगिरिं नत्वा गुरोराज्ञया
श्रीमन्नाथमुनेः पुरे निवसतिं कुर्वन् स्तुवाम्यादितः॥ ३४

*तोण्डमण्डलचोळदेशमध्यदेशपाण्ड्यदेशमलयालोत्तरदेशेषु विद्यमानाष्टोत्तरशतविष्णुस्थलान्याह।*

तोण्डमण्डलेषु मुख्यवेङ्कटाचलान्वितानि
वह्निसंख्यया समेतविंशतिः[3] (२३) भुवनस्थलेषु।
चोळदेशवर्तमानविंशतिद्वयस्थलानि (४०)
रङ्गसदनमादितः श्रुणुध्वमत्र भक्तितः॥ ३५

श्रीपाण्ड्यदेशस्थितचारुबाहोः
स्थलानि चाष्टादश (१८) वेङ्कटाद्रेः।
ये मध्यदेशद्वितयस्थले (२) च
फणीन्द्रपुर्यां सुरनाथविष्णोः॥ ३६

अनन्तशयनस्थलान् मलयदिव्यदेशानिमा[4]-
स्त्रयोदश (१३) रमापतेः तदनु चोत्तरे द्वारकात्।
स्थलानि च दश चोत्तरद्वितयसंयुतान्यापगाः (१२)
क्रमादुदधिसेतुयुक्स्थलसरांसि वक्ष्याम्यहम्॥ ३७

स्थलान्यष्टोत्तरशतं यः पुमान् श्रुणुयात् सकृत्।
तस्य श्रीवेङ्कटेशस्तु ददात्यैश्वर्यमन्वहम्॥ ३८

---

1- 1 for सालग्रामशिलां च गण्कनदीं; cf. 6.156.
2. A,B: सालिग्रा°
3. Ungrammatical compound
4. इमाः (fem.) for इमान् (masc)

*(वेङ्कटाद्रौ श्रीनिवासस्य प्रभावं श्लोकद्वयेनाह।)*

श्रीवैकुण्ठपतिः श्रिया सह पुरा स्वस्थानमप्युन्नतं
त्यक्त्वा भोगवतीं च दुग्धजलधिं संत्यज्य सर्वाधिकम्।
स्वर्णाद्रिं द्रविडेषु काञ्चननदीतीरं गतं भोगदं
संश्रित्याश्रितवत्सलो विजयते संपूर्णसौख्यप्रदः॥ ३९

नः पूर्वे गुरवोऽप्युपास्य बहुधा यस्य प्रसादाच्छ्रियं
मोक्षं चाप्यगमन् तथाप्यनुदिनं श्रीवेङ्कटेशं सदा।
ध्यायन्तः प्रकृतं भजाम इह चेत् संपूर्णसौख्यादिकं
दत्वास्माकमनन्तरं वितनुते श्रेयांसि भूयांसि सः॥ ४०

*श्लोकद्वयेन श्रीनिवासप्रभावं दर्शयन् तत्र स्वामिपुष्करिणीतटे[1] भूवराहं श्लोकद्वयेन वर्णयति।*

पयोराशिमध्यादिहागत्य विष्णुः
वराहस्वरूपं गृहीत्वाथ रात्र्याम्।
महारण्यमध्ये प्रविश्य प्रकामं
महत्कन्दमूलानभुञ्जद्यथेष्टम्॥ ४१

सरस्तीरवासं समाश्रित्य विष्णोः
सदा भृत्यवर्गैः सपर्यां च गृह्णन्।
वराहस्वरूपी वने सस्यपुञ्जान्
प्रविश्य प्रगृह्णन् सदा मोदते स्म॥ ४२

1. A,B: °ष्करणी°

*श्रीपुर्यां श्रीगोविन्दराजप्रभावं श्लोकेनैकेनाह।*

गोविन्दं मम चेष्ठदं प्रणमतां प्रज्ञामृतप्रापकं
गोपीनां तु सहस्रमादरवशादालिङ्ग्य सर्वार्थदम्।
मद्देहे नितरां पुराणकृपया मत्सन्ततेः संपदा-
मृद्धिं प्रापयितुं वसन्तमनिशं तोष्यामि मुक्तिप्रदम्॥ ४३

*तत्र पुर्यां जनमेजयप्रतिष्ठितश्रीरामप्रभावं श्लोकेनैकेनाह।*

कोदण्डपाणिः कुलमस्मदीयं
कुबेरसंपत्सहितं करिष्यन्।
कुशाग्रबुद्धिं कुशलं ममापि
कुर्वन् पुरेऽस्मिन् वसति प्रसिद्धः॥ ४४

*श्रीपुर्याः आग्नेयदिग्भागे शुकपुर्यां पद्माप्रभावं श्लोकद्वयेनाह।*

श्रीवासवक्षःस्थलसंश्रिता श्रीः
श्रीपादरेणुं तुलसीं ग्रहीतुम्।
ब्रह्मेन्द्ररुद्रादिभिरञ्चितापि
पद्माकरे प्रादुरभूत् प्रयत्नात्॥ ४५

हे पद्मे हरिवल्लभे श्रितजनानुक्रोशसंधायके
विद्युत्कान्तिसमप्रभे निरुपमानन्दैकराज्यप्रदे।
बिल्वैरर्चितपादपद्मयुगले बिम्बाधरे भार्गवि[1]
मन्दस्मेरमुखाम्बुजे शुकमुनेरामोदकर्त्र्यै नमः॥ ४६

---

1. A,B: भार्गवी

*नारायणवनाख्यनगर्यां कल्याणवेङ्कटेश्वरप्रभावं श्लोकपञ्चकेन वक्ष्यामि।*

नारायणवननिलयं
नारदविनुतं नमज्जनान्तस्थम्।
नवमणिशोभितकवचं
नवपतिवन्द्यं नमामि नलिनाक्षम्॥ ४७

कल्याणवेङ्कटेशः
कमलासहितः करोतु मम सौख्यम्।
कमलसरोवरतीर्थं
कलये सततं क़वेरजातुल्यम्॥ ४८

आकाशराजकृतप्राकारबृन्दयुतपाकारिपुरविकासा
वन्दारुजनवीतमन्दारतरुयुक्तबृन्दावनभ्रमयिता।
पारावरीसलिलधारातरङ्गयुतवारावतीमनुकृता
सरयूनदीसदृक्सरिता समाक्रान्तनारायणाख्यनगरी॥ ४९

अस्ति प्रशस्ता भुवि मानवाना-
मानन्ददा सर्वजनाभिवृद्धिदा।
आकाशराजन्यकृता पुरीयं
वृक्षैः समं राजति नर्मदानदी॥ ५०

आकाशराजपुत्रीमर्वा-
गुद्वाह्य चात्र निवसन्तम्।
अम्बुजवल्या साकमह-
मद्राक्षं वृषाचलाधीशम्॥ ५१

*चतुर्भिः श्लोकैर्घटिकाचलप्रभावमाह।*

वन्दे नृसिंहं घटिकाचलस्थं
प्रागाञ्जनेयं श्रितशङ्खचक्रम्।
सीतापतिं निर्झरसंघसेव्यम्
एते ग्रहोच्चाटनमान्त्रिकाः स्युः॥ ५२

अमृतवल्लीपतिर्हर्षमुत्पादय-
न्नाश्रितानां श्रियं चाञ्जनेयान्वितः।
गोष्ठसंज्ञं महत्पुष्पकं चारुह-
न्नमृततीर्थान्तिके प्रादुरासीद्धरिः॥ ५३

घटिकाचलस्थलमुपेत्य हरिः
सनकादियोगिनिवहैः सहितः।
सततं द्विजालिकुलवाङ्नुतिभिः
सकलान् जनानवति सत्कृपया॥ ५४

तक्कान्नाम हरिः पुरीमधिवसन्नक्कारकन्यासमं[1]
पुक्कानन्वितचोळसिंहपुराण्मिक्कानुपेत्य स्थितः।
विष्णूनां प्रतिवत्सरं करुणया वाधूलवंश्योत्तमाः
कुर्वन्त्यत्र महोत्सवं जनपदे राज्ञां प्रतिष्ठावहम्॥ ५५

*श्लोकेनैकेन[2] कूरपुराधीशश्रीवत्सचिह्नमिश्रगुरुप्रभावमाह।*

कूरेशं मनसा स्मरामि सततं प्रज्ञासुधावारिधिं
वाणी यस्य कथापि वैष्णवपदप्राप्तिप्रदा प्रायशः।
वेदान्तार्थविचारणाद्विबुधहृद्विज्ञानवृद्धिप्रदा
विख्याता विमतेष्वपि प्रतिदिनं तां वाचमीडीमहे॥ ५६

1. A,B: °कण्यासमं
2. A,B: श्लोकेनेकेन

*श्लोकद्वयेन विजयराघवप्रभावं[1] वर्णयति।*

विजयपदाश्रितवन्तं
राघवमनिशं नमामि शिरसाहम्।
विधिशिवदेवादिनुतं
विनतं रक्षन्तमञ्जसा गृध्रम्॥ ५७

अग्रहारस्थितज्ञानिनो वैष्णवाः
राघवं चोत्सवे पूजयित्वार्चकैः।
तत्कटाक्षात्तथा वैष्णवाराधनं
पुत्रपौत्रादिभिः संयुताः कुर्वते॥ ५८

*चतुर्भिः श्लाकैः श्रीकाञ्च्यां देवराजं वर्णयति।*

अनन्तसरसस्तटे करिगिरौ हरिद्राभिदां
वधूं वरुणनामकं नरहरिश्रयं पुष्पकम्।
बृहस्पतिसरस्वतीप्रमुखदेवतावन्दितो
विभाति स गुहालये प्रथितशस्त्रभूषाम्बरैः॥ ५९

काञ्चीनगरनिवासं
करिशैलेशं नमामि तत्पत्नीम्।
प्रबन्धमनुसंदधतां
प्रज्वलगोष्ठीं प्रशस्तविभवाढ्याम्॥ ६०

पुरा हस्तिशैले सुरैः सेव्यमानः
सदा योगिबृन्दैर्विधातुर्मखाग्नौ।
बृहत्पूज्यमात्रासमं वेगवत्याः
तटे पुण्यकोट्यां स्वयं प्रादुरासीत्॥ ६१

---

1. in Tiruppakkali

करिशैलनायकमणेः कृपया
कमलासनस्य मखपूर्तिरभूत्।
अमृतान्धसोऽपि हुतभुग्वदना-
दभुजन् हवींषि वपया च समम्॥ ६२

*अत्राष्टादशविष्णुस्थलान्याह।*

काञ्चीपुरेऽष्टादशचक्रपाणेः
विष्णोः स्थलं प्राप्य सकृत् प्रदर्शनम्।
करोति वस्त्राभरणानि चादरात्
पुमान् पुनर्जन्म न विन्दते भुवि॥ ६३

*श्लोकद्वयेन यथोक्तकारिणो भगवतः प्रभावमाह।*

विधेरश्वमेधे विरोधं विधातुं
प्रवृत्तौ तटिन्यां यथोक्तानुकारी।
क्रुधा नग्नभावं गृहीत्वा प्रवाहे
यदा सेतुरास्ते ह्रियान्तर्हितोऽभूत्॥ ६४

श्रीवेदसारात्मिकयानमध्ये
प्राक् चारुवल्या सह संनिवेश्य।
यथोक्तकारी वरपोय्कैतीर्थे
प्रत्यक्षमासीत् खलु पूर्वयोगिनः॥ ६५

*अस्मिन् श्लोके दीपप्रकाशं भगवन्तं वर्णयति।*

दीपप्रकाशोऽत्र दिवानिशं ज्वलन्
गारुत्मतश्रीसहितः सनातनः।
सरस्वतीतीर्थतटेऽब्जयोनेः
विमानमध्यारुहदश्वमेधे॥ ६६

*अनेन श्लोकेनाष्टभुजनामकं भगवन्तं वर्णयति।*

अष्टभुजेषु प्रकटितशस्त्रः
स्वाश्रितशत्रूनसुरसमूहान्।
हत्वानन्तरममरगणानाम्
अमृतं प्रादाद्विधिहयमेधे॥ ६७

अलुमेलुमङ्गनाम्नीं
लक्ष्मीमुद्वाह्य चक्रधृत् काञ्च्याम्।
गगनाकारविमाने
गजेन्द्रवरदः स्वयं प्रसन्नोऽभूत्॥ ६८

*श्लोकद्वयेन त्रिविक्रमप्रभावं वर्णयति।*

त्रिविक्रमश्चामृतवल्लियोडे
साराह्वयं दिव्यविमानमेरि।
काञ्चीपुरे वामनतीर्थतीरे
प्रत्यक्षमानार् भुजगेन्द्रनुक्कु॥ ६९

अयं त्रिविक्रमो जगत् पदत्रयेण मानितुं
द्विजातिवेषमाश्रयन् पुरा बभूव वामनः।
परं रसातले प्रभुं बलिं प्रपात्य तत्क्षणात्
त्रिविष्टपं मरुत्वतेः सुधां ददौ दिवौकसाम्॥ ७०

1. A,B: कळ्वनामकं

*अस्मिन् श्लाके कळ्वन्नामकं[1] भगवन्तं वर्णयति।*

कळ्वन्नाम हरिः पितामहमघे कामाक्ष्यगारान्तिके
गौरीतीर्थतटे पराशरमुनेरिष्टं ददन्नध्वरे।
काञ्च्यां पुष्करनामकं मणिमयं दिव्यं विमानं श्रिया
देव्या पद्मलताख्यया प्रविशति श्रीदेवराजाज्ञया॥ ७१

*श्लोकद्वयेन करुणाकरविष्णोः प्रभावमाह।*

करुणाकर इति देवः
रमणीमणिनाम भार्यया साकम्।
तन्नामकं विमान-
मारुह्यासौ विराजते नित्यम्॥ ७२

पुराम्बरीषाख्यतटाकतीरे
यः कम्बुनाम्ना ऋषिणा समेतः।
यागार्थमादौ विधिना नियुक्तः
काञ्चीनिवासं प्रकटीकरोति॥ ७३

*(श्लोकेऽस्मिन् जगदीशविष्णोः प्रभावमाह।)*

जगद्विमानं जगदीशविष्णुः
अक्रूरतीर्थस्य तटं प्रविश्य।
श्रीदेवराजस्य बलादिमान् जनान्
पुनाति नित्यं निलमङ्गयान्वितः॥ ७४

*श्लोकेऽस्मिन् पाण्डवदूतस्य कृष्णस्य प्रभावं वर्णयति।*

पाण्डवदूतः कृष्णः
भद्रविमानं प्रविश्य भुवि काञ्च्याम्।
सत्यसरोवरतीरे
सत्यरमां प्राप्य मोदते नित्यम्॥ ७५

*श्रीकाञ्च्याः पश्चिमभागे नेलात्तुण्डविराड्नामकविष्णोः प्रभावमाह।*

काञ्च्याः नेलात्तुण्डविराट् प्रतीच्यां
शम्भोः स्वयं चात्मभुवः कृपालुः।
यज्ञेषु चायातवतां सुराणा-
मन्नामृतं प्रागदादाच्छ्रियःपतिः॥ ७६

भानोर्विमानं शशिपुष्करिण्याः
तटे निविश्याविरभूत् कृपालुः।
देव्या च सत्याह्वयया समेतः
काञ्चीनगर्यां कमलासनेडयः॥ ७७

*श्लोकद्वयेन वैकुण्ठनाथप्रभावं वर्णयति।*

विमानमुत्तुङ्गमवेक्ष्य चादरा-
द्वैकुण्ठमुत्सृज्य भुवंगतः सन्।
उपर्युपर्यत्र च वृत्तिभेदा-
न्नामानि चाश्रित्य विराजते विराट्॥ ७८

वैकुण्ठनाथोऽत्र गजेन्द्रमुक्तचै
वैकुण्ठदेव्या सह मोदमानः।
प्रभासरस्तीरगतं मुकुन्द-
विमानमारुह्य विभाति सर्वदा॥ ७९

*अस्मिन् श्लोके हरितवर्णस्य विष्णोः प्रभावं वर्णयति।*

हरितकान्तिमुपेत्य पुरा हरिः
हरविरिञ्चिमघेशसुरार्चितः।
करिगिरीशसमानकृपारसं
कतिपयेषु जनेषु ददात्यलम्॥ ८०

*प्रवालवर्णस्य माधवस्य प्रभावं श्लोकेऽस्मिन् निरूपयति।*

प्रवालवर्णेन समानवर्णः
प्रशस्तकाञ्चीपुरवामभागे।
प्रतिष्ठितः प्रीतसुराधिपेन
प्रत्यक्ष आसीत् परमेश्वरस्य॥ ८१

*वेदान्तदेशिकगुरोः प्रभावं श्लोकेऽस्मिन् दर्शयति।*

वेदान्तदेशिकगुरुं विनतानवन्तं
वीक्षापि मोक्षमनिशं विदधाति यस्य।
विद्याकलापविभवैर्विमतेषु नित्यं
विख्यातवैभवमहं प्रणतोऽस्मि नित्यम्॥ ८२

*अस्मिन् श्लोके एकाम्रेश्वरस्य महेश्वरस्य प्रभावं वर्णयति।*

बृहत्काञ्चीमध्यस्थितमवनिरूपं स्मरहरं
निशम्यास्मिन् क्षेत्रे सरसि सलिलं भेषजसमम्।
नभोमार्गं रुद्ध्वा विलसितबृहद्गोपुरचयं
प्रतोल्यां कामाक्ष्याः प्रथितवरदस्योत्सवगणान्॥ ८३

*कामाक्षीप्रभावमाह।*

कामाक्षीं कलयामि कल्पलतिकां कल्याणभूषाम्बरां
काञ्चीभूगतकामकोटिनिलयां काम्यार्थसिद्धिप्रदाम्।
काञ्चीदेशनिवासिभिः कतिपयक्षेत्राच्युतैरावृतां
कान्तां देहगतां भवस्य महिषीं कल्याणपारम्परीम्॥ ८४

*वीक्षारण्यक्षेत्रे वीरराघवप्रभावं त्रिभिः श्लोकैराह[1]।*

हृत्तापनाशसरसीतटवृक्षमूले-
ष्वासन्नयोगिनिवहैः सहितोऽथ रामः।
वीक्षावनस्थलगतं विजयं विमान-
मासाद्य भूमिसुतया सह मोदते स्म॥ ८५

वीक्षारण्ये विजयविमाने
वृत्तिं धत्ते विनतानवितुम्।
वीरश्रेष्ठैर्विनुतपदः सन्
वीरं राघवमनिशं ध्याये॥ ८६

श्रीवीरराघवहरिः श्रितशालिहोत्रः
पार्श्वस्थहेमलतया परिपूर्णकान्तिः।
नित्यं महर्षिनिवहैः सहितः प्रसिध्दः
क्षेमं करोति नितरां शरणागतानाम्॥ ८७

*श्रीभूतपुर्यां शेषांशेनावतीर्णस्य यतिशेखरस्य भगवतः रामानुजस्य प्रभावं श्लोकद्वयेनाह।*

श्रीभूतपुर्यां यतिसार्वभौमः
श्रीकेशवेऽत्यन्तगुणानुरक्तः।
दिव्यस्थलेष्वत्र , च तत्र विष्णोः
सम्यक् प्रभावं प्रकटीकरोति॥ ८८

---

1. A,B: श्लोकेनाह

शेषांशभूतः श्रितपारिजातः
शेषाचले श्रीपतिहर्षकारी।
सेवार्थिनां शश्वदसावमुष्य
सेवां प्रकुर्वन् वसति प्रसिद्धः॥ ८९

*मधुरमङ्गलनामकक्षेत्रे रामानुजाचार्यावरजप्रभावमाह।*

यतीश्वरस्यावरजो महात्मा
एम्बारिति ज्ञानवतां वरेण्यः।
यद्भक्तियोगाद्यतिराजशय्यां
परीक्ष्य मूर्त्या गुरुमध्यरोहयत्॥ ९०

*श्लोकद्वये महीसारपुराधीशस्य भक्तिसारस्य प्रभावं वर्णयति।*

भक्तिहीनमनुजा भवतापै–
र्बाधिता यदि भृशं भुवनेषु[1]।
भक्तिसारमुनिदर्शनमारात्
प्राप्नुवन्ति यदि ते खलु मोक्षम्॥ ९१

भक्तिसारपुरवासिनो द्विजाः
भुक्तिमुक्तिकरकर्मनैष्ठिकाः।
भूभुजैश्च सततं बहुमान्याः
बन्धुभिः सह वसन्ति वरिष्ठाः॥ ९२

---

1. A,B: भवनोषु

*श्लोकेऽस्मिन् हरितवारणक्षेत्रप्रभावं निरूपयति।*

सर्वेऽपि गारुत्मतविष्णुमन्दिरं
संसेव्य कालत्रितयेषु संगताः।
समग्रभक्त्या सततं मनोरथान्
समाप्नुवन्त्यत्र सहस्रशो जनाः॥ ९३

*तत्रैव कन्दाडमोदलियाण्डान् प्रभावं श्लोकेऽस्मिन् दर्शयति।*

कन्दाडैमुतलियाण्डान्
कमलाधिपतिं प्रतोष्य भाष्यार्थात्।
कलयन् मातुलसेवां
कालक्षेपं करोति कलिकाले॥ ९४

*पून्तमल्लाख्यपुरे काञ्चीपूर्णस्य प्रभावं श्लोकेऽस्मिन् वर्णयति।*

काञ्चीपूर्णः कश्चिदन्वर्थनामा
काञ्च्यां विष्णोरर्चनाकार्यकाले।
कञ्चित् कालं वीजयन् तालवृन्तं
काञ्चीपुर्यां वर्तते श्रीधरेण॥ ९५

*श्लोकद्वयेन तिरुनीर्मलैप्रभावं दर्शयति।*

पयोगिरिं प्राप्य सदा मुकुन्दः
प्राग्देवकीर्त्याख्यविमानमध्ये।
माणिक्यतल्पे प्रियया समेतः
मदीयवाणीं प्रकटीकरोतु॥ ९६

अणिमामलरिति देवी-
मारादासाद्य निश्चलो देवः।
मणिकर्णिकाप्रवृत्तै-
रुत्पल गन्धैः प्रमोदते नित्यम्॥ ९७

*त्रिभिः श्लोकैः (तिरुनिन्रयूरि) भक्तवत्सलप्रभावं वर्णयति।*

उत्पलाह्वयविमानमाश्रयन्
उत्सवं प्रकुरुते मनुजानाम्।
भक्तवत्सल इति प्रथितः सन्
भाग्यवद्भिरनिशं बहुमान्यः॥ ९८

मत्सूतमात्रा सह मत्पितासौ
वारुण्यतीर्थे वरुणे प्रसन्नः।
वाणीं मदीयां वनजाक्षभृत्यै-
राश्रावयन् मामिह रक्षति स्म॥ ९९

श्रीमद्वेङ्कटलक्ष्मणार्यगुरुणा संपादितेऽस्मिन् स्थले
विष्णूनां कलितक्रियास्वपचितिं कैङ्कर्यरूपां श्रियम्।
तद्योगीश्वरशासनात् प्रतिदिनं श्रीवैष्णवाः कुर्वते
तस्मादत्र महोत्सवादिविभवं तोष्यामि मुक्तिप्रदम्॥ १००

*तिरुवल्लिकेण्यां पार्थसारथेः प्रभावं दशभिः शलोकैर्वर्णयति।*

सत्यव्रतक्षेत्रसमं पुरातन-
स्थलं जगत्यां सकलार्थसाधकम्।
संपूर्णसौख्यास्पदमाश्रितानां
सदा स्मराम्यत्र च पार्थसारथिम्॥ १०१

बृन्दारण्यक्षेत्रवासं पृथिव्यां
बृन्दं बृन्दं ब्राह्मणाः प्रार्थयन्ति।
ब्रह्माण्डेऽस्मिन् ब्रह्मणि श्रीनिवासे
मोक्षं यद्वत् पार्थसूतेऽपि कृष्णे॥ १०२

पूर्वाम्बोधेस्तटगतभूम्यां
पूरितशङ्खः पुरमध्यस्थः।
पूर्वं युद्धे विजयसहायः
पुरुषश्रेष्ठः पूजां लभते॥ १०३

कैरवणीतटभूम्यां
कैतवसंयुक्तमादृशान् रक्षन्।
कैटभहन्ता कृपया
कैरववृद्धिं करोति कासारे॥ १०४

वेदवल्लीपतिर्वेदमाश्रावयन्
वेङ्कटेशो यथा वेगमुक्तिप्रदः।
व्याधिभेदग्रहान् शीघ्रमुच्चाटयन्
वस्तुनां[1] संपदां वृद्धये कल्पते॥ १०५

पार्थसूताश्रितैर्योगिभिः प्रार्थितः
पञ्चधा रूपवान् प्राक् पयोधेस्तटे।
पर्वकाले सकृन्मज्जनं कुर्वतां
प्राणिनां मोक्षकृत् प्रादुरासीद्धरिः॥ १०६

---

1. for वस्तूनां to save metre

रङ्गनाथः स्वयं रङ्गवल्या श्रिया
राजतेऽस्मिन् स्थले राजभोगोचितः।
राज्यतन्त्रश्रियं राजभूपैः सदा
रक्षयन्[1] मामसौ रङ्गनाथाश्रयम्॥ १०७

गजेन्द्रवरदः स्वयं गजमवेक्ष्य मोक्षार्थिनं
गदादिभिरलंकृतो गतिमुदग्रमुत्पादयन्।
गभीरपयसि स्थितं ग्रहमुखेन संपीडितं
गवांपतिहरेर्गृहं प्रविशति प्रहृष्टः सदा॥ १०८

नृसिंहरूपी भगवानमुष्मिन्
क्षेत्रे पुरा प्रादुरभूत् प्रतीच्याम्।
तद्देशजानां च विशेषसौख्यं
कर्तुं सदा योगिवरेण संनुतः॥ १०९

रावणहन्ता रणसन्तोषी
रम्यपृषत्कैर्युतधानुष्कः।
रत्नालङ्कृतरमया युक्तः
राजति पृथ्व्यां रथिको रामः॥ ११०

*मयूरनगर्यां माधवप्रभावमाह।*

मयिलापुर्यां मनुजानवितुं
माधवशौरिर्महिलायुक्तः।
पेयाळ्वारै पेरिमयै योडे
पेणि इरुक्कार् पेरुमाळ्क्के॥ १११

---

1. A,B: रक्षन्

*तिरुक्कडल्मलै ।*

जलधिगतस्थलशायी
जगति विमानं प्रकाश्य गगनाख्यम्।
भूसुतया सह नित्यं
भूतमुनेर्दृष्टिविषयमापन्नः॥ ११२

मार्कण्डेयमुनेर्ममापि च सकृन्मायाविनामग्रणीः
चक्षुर्गोचरतामुपेत्य सहसा सर्वार्थसिद्धिं दिशन्।
तत्रत्यान् मनुजाधिपान् नरवरान् सेवापरान् रक्षितुं
कारुण्याद्भुजगाधिपे निवसति श्रीभूमिदेव्याश्रितः॥ ११३

*तिरुवडन्दै।*

कल्याणविष्णुः कमलासमेतः
कल्याणतीर्थे कलितोदयः सन्।
करोति सौख्यं मम चाश्रितानां
कवेरजावल्लभवत्प्रसिद्धः॥ ११४

कल्याणाख्यविमाने
करोति वसतिं मृकण्डुतनयेन।
कविभिर्निजगुणकथनं
कतमैः श्रोतुं महात्मनां मध्ये॥ ११५

*शिङ्गप्पेरुमाळ्कोयिल्।*

शिङ्गप्पिरान् श्रीपतिरम्बुजाक्षः
पान्थानवन् पद्मजया समेतः।
परं मुनीनामभयप्रदः सन्
प्रह्लादवाचं प्रकटीकरोति॥ ११६

*मधुरान्तकपुर्यां श्रीरामसंनिधौ श्रीभाष्यकारस्य पञ्चसंस्कारप्रभावमाह।*

मधुरान्तकनगरी सा
मधुरतटाकेन शोभिता नित्यम्।
मधुरापुरनिभमहिमा
माधववसतिं करोति मनुजेष्टम्॥ ११७

श्रीदेवराजस्य वचो निदाना-
च्छ्रीमन्महापूर्णगुरोर्यतीश्वरः।
श्रीशङ्खचक्राङ्कनमन्त्रराजान्
समग्रहीच्छ्रीपतिरामसंनिधौ॥ ११८

*मध्यदेशस्थितस्थलद्वयप्रभावमाह। तिरुक्कोवलूरु।*

आदिनाथहरिरत्र मृकण्डो-
रग्रतः कवनवाचमुवाच[1]।
अस्य वाङ्मधुझरी मनुजानां
वाग्विलासमकरोत् कवितासु॥ ११९

श्रीकरनामविमाने
श्रीपतिरद्यापि शोभते नित्यम्।
श्रीकृष्णतीर्थपयसा
श्रितजनसंतोषविभ्रमं कुरुते॥ १२०

*गरुडनदीतीरस्थितस्य सर्पश्रेष्ठपुरवराधीशस्य प्रभावं श्लोकद्वयेनाह।*

भूम्यां तार्क्ष्यनदीतटे स्थितिजुषोर्नित्यं मृकण्डोर्मुनेः
प्रत्यक्षं गतवानहीन्द्रनगरीमध्ये रमानायकः ।

---

1. कवन is of Prakrit origin

तत्क्षेत्रे फणिराजकल्पितमहाकूपोद्धृतात् पुष्करात्
पूजां चक्रुरहर्निशं द्विजवराः प्राग्देवनाथं सदा॥ १२१

वेदान्तविद्यागुरुसार्वभौमः
विद्वत्प्रकाशं विमतेषु कुर्वन्।
वेदेषु तन्त्रेषु च साहितीनां
व्यासङ्गमाकुर्वीत तत्प्रसिद्धः॥ १२२

*चोलदेशे[1] विद्यमानश्रीरङ्गादिदिव्यक्षेत्रप्रभावान् वर्णयति।*
*श्रीरङ्गनगर्यां श्रीरङ्गनाथप्रभावमाह।*

रङ्गं रङ्गमिति ब्रुवन्नुषसि यः श्रीरङ्गनाथं सदा
तत्पत्नीं परवासुदेवमनिशं सह्योद्भवां पावनीम्।
कावेरीं च सुधांशुपुष्करिणिकां[2] गत्वा तयोर्मज्जनं
कृत्वा चाह्निकमादरात् प्रकुरुते मुक्तो भवेदात्मवान्॥ १२३

रङ्गं नाम विमानमद्भुततरं वेदान्तसारात्मकं
वैकुण्ठागतमप्रमेयविभवं विद्युत्प्रकाशं स्थिरम्।
सर्वेषामपि मुक्तिदायकमिदं रामेण दत्तं पुरा
यस्मै तेन विभीषणेन सरितोर्मध्ये प्रतिष्ठापितः॥ १२४

कावेरीद्वयमध्यभागनिलयः श्रीरङ्गनाथः श्रिया
साकं सात्त्विकयोगिभिर्यतिवरैः संस्तूयमानः सदा।
सर्वेषामपि दुःखसिन्धुतरणोपायं स्वयं सूचयन्
चक्रे चाध्ययनोत्सवेष्वतिमुदं सर्वस्थलापेक्षया॥ १२५

1. A,B: °देशेषु

2. A,B: °ष्करणीकां

श्रीरङ्गेशो मम हृदयस्थः
श्रमपरिहारं शान्तिं कुर्वन्।
सत्सल्लापं सकलविभूतिं
संसदि वाणीं सततं दिशति॥ १२६

सकलदुरितहारी साधुकष्टापहारी
समरमुखविहारी सर्वजीवोपकारी।
सततगुणविहारी सच्चिदानन्दकारी
समदिशति हरिर्मे संपदं सौख्यकारी॥ १२७

सप्तप्राकारमध्ये सकलमुनिवरैः साकमाचार्यवर्याः
स्तोतुं श्रीरङ्गनाथं परिचितनिगमान्तार्थनिष्ठाः वरिष्ठाः।
हेमन्ते मार्गशीर्षे मुनिगणरचितद्राविडोक्तिप्रबन्धैः
विष्णोरास्थानगोष्ठ्यामसकृदनुदिनं स्तोत्रयामासुरुच्चैः॥ १२८

कावेरीं कलयामि कान्तसलिलां काम्यार्थसिद्धिप्रदां
सह्याद्रेश्च समुद्भवां सविधभूसस्याभिवृद्धिप्रदाम्।
यस्यास्तोयमुपास्य वाति पवनो तद्देशजानां सदा
मुक्तिः सिद्ध्यति तत्तटे निवसतां भाग्यं च किं ब्रूमहे॥ १२९

श्रीरङ्गराजमहिषीं श्रितकल्पवल्लीं
शृङ्गारनाटककथाश्रवणैकशालाम्।
श्रीरङ्गवासिजनमङ्गलमावहन्तीं
श्रीमद्धिराश्रितपदां श्रियमाश्रयेऽहम्॥ १३०

*श्रीरङ्गनाथस्यान्तरङ्गभूतमुनिवाहनप्रभावं वर्णयति।*

रङ्गनाथः स्वयं ज्ञानभक्त्याधिकं
गानशीलं मुनिं योगिवाहं सकृत्।
जातिकृत्योज्झितं प्राकृतैर्निन्दितं
पूजितं स्वार्चकैरग्रहीदादरात्॥ १३१

कावेरीपुलिनेन्दुपुष्करिणिकातीरे[1] शयानं हरिं
श्रीपादादिशिरोपरिस्थमकुटं संसेव्य हृष्टात्मना।
नेत्राभ्यां विषयान्तराणि भुवनेष्वज्ञातवान् यो सकृत्
तं भक्त्या मुनिवाहनं हृदि चिरं ध्यायाम्यहं विष्णुना॥ १३२

*श्रीरङ्गस्थलपुराणवचनानि विलिख्यन्ते[2]।*

*आद्यं स्वयंव्यक्तमिदं विमानं रङ्गसंज्ञकम्[3]।*
*श्रीमुष्णं वेङ्कटाद्रिं च सालग्रामं च नैमिशम्॥* १३३

*तोताद्रिं पुष्करं चैव नरनारायणाश्रमम्।*
*अष्टौ मे मूर्तयः सन्ति स्वयंव्यक्ता महीतले॥* १३४

*विमानं प्रणवाकारं वेदशृङ्गं महाद्भुतम्।*
*श्रीरङ्गशायी भगवान् प्रणवार्थप्रकाशकः॥* १३५

*कावेरी विरजा सेयं वैकुण्ठं रङ्गमन्दिरम्।*
*स वासुदेवो रङ्गेशः प्रत्यक्षं परमं पदम्॥* १३६

*कावेरीतीरमाश्रित्य वातो यत्र प्रवर्तते।*
*तद्देशवासिनां मुक्तिः किमु तत्तीरवासिनाम्॥* १३७

1. A,B: °ष्करणि°
2. A,B: °ख्यते
3. A,B: °संज्ञिकम्

*कावेर्याः दक्षिणतीरस्थित–ओरयूर्लक्ष्म्याः प्रभावमाह।*

ओरयूर्नाच्चारूरिलेवन्तिरुन्त
श्रीरङ्गेशनै शीघ्रमाय् कण्डुकन्तु।
भूषावस्त्रैर्भूष्यमाणेन भर्त्रा
साकं रेमे हंसतल्पे निशायाम्॥ १३८

*देवोत्तमक्षेत्रप्रभावमाह।*

देवोत्तमो नाम हरिर्जगत्यां
देव्यारविन्दाह्वयया समेतः।
उद्योगसंज्ञं स्वविमानमेत्य
कदम्बतीर्थस्य तटं प्रपेदे॥ १३९

उपरिचरवसुं विलोक्य विष्णुः
जनकनृपं परितोषयांचकार।
कलिहमिह सदा कवेरकन्या–
तटगतयोगिवरानवेक्षमाणः॥ १४०

*तिरुवल्लरै।*

श्वेताद्रौ विमलाह्वयं मुनिगणैः सेव्यं विमानं महत्
पद्माक्षः प्रविविश्य पद्मलतया साकं गुहायां वसन्।
मार्कण्डेयमुनीश्वरोदितमहत्क्षेत्रप्रभावैः समं
तीर्थानामतुलप्रभावमनिशं शृण्वन् सदा मोदते॥ १४१

क्षेत्रेऽस्मिन् नवतीर्थवैभवकथां श्रोतुं प्रवृत्तो हरिः
सर्वज्ञोऽप्यनिशं सहस्रवदनब्रह्मेन्द्ररुद्रैः समम्।
अद्याप्यत्र महर्षयः सुरगणास्तीर्थेष्वजस्रं तपः
कुर्वन्तः व्रतकर्मनैष्ठिकपराः तिष्ठन्ति मोक्षार्थिनः॥ १४२

*अम्बर्संनिधिः।*

मण्डूकपुष्करिण्यां
तारविमाने भुजङ्गशयनः सन्।
सुन्दरदेव्या साकं
सुन्दरविष्णुः स्तुते[1] प्रसन्नोऽभूत्॥ १४३

*तिरुप्पेर्नकरान्।*

हस्तापूपघटप्रकाशकहरिं नारायणं नामतः
श्रीराजीवलताह्वया कमलया शेषे शयानं पुरा।
भूम्यामिन्द्रविमानमद्भुततरं तीर्थं च तन्नामतः
ख्यातं तं समुपास्महे करुणया मां सर्वदा रक्षितुम्॥ १४४

*कण्णन्कपिस्थलम्।*

कण्णन्कपिस्थलपुरे कलयामि विष्णुं
काकोदरेन्द्रशयनं कमलासहायम्।
कासारमत्र कमलाभिधया प्रशस्तं
काम्यार्थदं च कलुषापहरं नराणाम्॥ १४५

गगनगतिविमानं गन्धवाहैः समानं
गगनगतसुरेन्द्रैः पूजितं गन्धमाल्यैः।
गजपतिवरदस्तं प्राप्य पूर्वं गजेन्द्रं
सुगतिमदिशदस्मै श्रीरमण्या समेतः॥ १४६

---

1. A,B: सुते

*पुल्लंपूतस्थलप्रभावं वर्णयति।*

पुल्लंपूतस्थलगतरामः
पन्नगशायी पथिकानवितुम्।
पोर्त्तामरै देवियरोडङ्गे
पोर जटायुकु मोक्षं तन्दार्॥ १४७

*कूडलूरुस्थले जगद्रक्षकस्य विष्णोः प्रभावमाह।*

पद्मासिन्या सह वरदराट् शुद्धसत्वं विमानं
गत्वा प्रीतः परमकृपया चक्रतीर्थस्य तीरे।
प्राज्ञान् विप्रानवितुमनिशं नन्दकाख्यं मुनीन्द्रं
दृष्ट्वा हर्षं जनयति हरिः श्रीजगद्रक्षकाख्यः॥ १४८

*आदनूरुस्थलगतविष्णोः प्रभावं वर्णयति।*

प्रणवाकारविमाने
सूर्यसरस्यास्तटं प्रविष्टः सन्।
श्रीरङ्गनायिकाख्यां
पत्नीं प्राप्य प्रमोदते विष्णुः॥ १४९

*तिरुक्कोडन्तस्थले शार्ङ्गपाणेर्विष्णोः प्रभावमाह।*

कुम्भकोणस्थले वामदेवः पुरा
हैमवत्या समं विघ्नराजार्चितः।
अष्टभूमिं दिशन्नच्युतप्रेरणा-
दाश्रितानां सुखं चादरात् कल्पते॥ १५०

श्रीकुम्भकोणे नयनाभिरामे
श्रीशार्ङ्गपाणिः श्रितशङ्खचक्रः।
श्रिया समेतः श्रमवारिधेः जना-
नुत्तारयत्येष उमापतिङ्गतान्॥ १५१

करे शार्ङ्गं धृत्वा करधृतशरैः खण्डितरिपुः
कति क्षेत्रे तिष्ठन् करगतरथाङ्गाब्जयुगलः।
कलौ मर्त्यान् रक्षन् कमलसरसीवासरसिकान्
कथं श्रीशोऽस्माकं कवनपरिपूर्तिं न कलयेत्॥ १५२

भूम्या समाश्रितभुजङ्गविमानमाद्यम्
आविश्य हेमलतया प्रियया समेतः।
श्रीहेमपुष्करिणिकाप्लवनिर्मलेन[1]
हेमर्षिणा सह रराज सुरेन्द्रवन्द्यः॥ १५३

*पापविनाशनक्षेत्रप्रभावं दर्शयति।*

पापनिहन्ता विष्णुः
पङ्कजवल्या समाश्रितः पृथ्व्याम्।
पापविनाशविमानं
पावनतीर्थे प्रकाशमुपयाति॥ १५४

*अणियलुन्तूराख्यतेरलन्दूरुस्थलप्रभावं वर्णयति।*

कृष्णारण्ये गरुडविमाने
पङ्कजवल्या सह पद्माक्षः।
दर्शनकासारतटप्रान्ते
प्रत्यक्षोऽभूदमरगणानाम्॥ १५५

---

1. A,B: °ष्करणि°

*तिरुच्चरै इत्यभिधानक्षेत्रे विष्णोः प्रभावमाह।*

सारचतुष्टययोगात्
सारविमानं प्रविश्य सह देव्या।
समदिशदिह संपन्नं
संपदममृतं सदाच्युतो नृणाम्॥ १५६

*तिरुमण्डङ्कुडिक्षेत्रे भक्ताङ्घ्रिरेणुनामकयोगिनः प्रभावमाह।*

नान्यं स्मृत्वा चपलधिषणे श्रीपतिं रङ्गनाथं
ध्यायन्नस्मिन् प्रपदनजुषां योगिनामङ्घ्रिमूले।
मालागाथामुषसि कलितं विष्णुभक्ताङ्घ्रिरेणुं
भक्त्या नित्यं भजत यदि ते मुक्तिरस्य प्रसादात्॥ १५७

*नावूरुनागपट्टणप्रभावं वर्णयति।*

नावूर्क्षेत्रे नागपुर्यां च विष्णु-
र्नानाभूषाभूषितः श्रीसमेतः।
नानाक्ष्माभृत्पालनं ब्राह्मणानां
क्षेमं कुर्वन् मादृशान् रक्षति स्म॥ १५८

सुन्दरनामा विष्णुः
सुन्दरदेव्या प्रकल्पितामोदः।
सारसनाम्ना सहिते
सरसि पुरेऽस्मिन् प्लवोत्सवं कुरुते॥ १५९

*राजमन्नार्संनिधिः।*

श्रीराजगोपाल इति प्रसिद्धः
श्रीभूमिदेव्या सहितो ममाग्रे।
नित्यं प्रसन्नो भवति त्रिकाले
शस्त्रादिभूषाम्बरभूषितः सन्॥ १६०

पुरा चम्पकाख्ये वने वासुदेवः
स्थले गोपिकानां सहस्रेण साकम्।
हरिद्रातटिन्यां प्लवं कर्तुमिच्छन्
वराषाढमासे तु चिक्रीड शौरिः॥ १६१

गोपिकांसनिहितैकबाहवे
स्वर्णवेत्रमितरेण बिभ्रते।
राजगोपवपुषे नमोऽस्तु ते
चम्पकावनविहारिणे हरे॥ १६२

राजमानसुधाकार राजीवायतलोचन।
राजशेखर विन्ध्याद्रौ राजगोपाल पाहि माम्॥ १६३

समस्तकल्याणगुणैकपूर्णं
संदृष्टरूपं सकलास्त्रशस्त्रम्।
समस्तसौख्यं सकलेन्द्रियाणा-
मापादयन्तं प्रणतोऽस्मि नित्यम्॥ १६४

*वडूरुक्षेत्रे श्रीरामस्य प्रभावं दर्शयति।*

वडूराख्यक्षेत्रे वरगुणधनुष्मान् वनितया
श्रिया युक्तः श्रीमान् दशरथसुतः सुन्दरवपुः।
महौन्नत्याद्रामो महितमणिभूषाम्बरशतैः
अलङ्कुर्वन् श्रीमान् वितरति जनाभीष्टमनिशम्॥ १६५

*श्रीमुष्णनामकक्षेत्रे वराहरूपधरस्य विष्णोरौन्नत्यं वर्णयति।*

श्रीमुष्णाख्यक्षेत्रमुर्व्यां प्रसिद्ध–
मासीदस्मिन् भूवराहः प्रसिद्धः।
विष्णोः पत्नी पद्मजेति प्रसिद्धा
भूयास्तां नः संपदे दम्पतीह॥ १६६

प्राक् झिल्लिकानामवनं प्रविश्य
प्रत्यक्षतां प्राप्य वराहविष्णुः।
अश्वत्थनारायणपुरुषस्य
हर्षं प्रकुर्वन्नधुना विभाति॥ १६७

पावनिनामविमानं
प्रविविश्यासौ वराहरूपः सन्।
परमकृपालुर्भगवान्
पथिकानस्मान् पुनाति सविशेषम्॥ १६८

अम्बरीषनृपतेः परितोष–
माश्रितेषु मनुजेषु विशेषम्।
अन्तरेण मम[1] मत्सदृशाना–
मायुरर्थमददात् किटिरूपी॥ १६९

वराहरूपी भगवानमुष्मिन्
क्षेत्रे स्वयं चाविरभूत् कृपालुः।
इष्टं प्रकुर्वन् सततं जनानां
श्रीनित्यकासारतटे स्थितानाम्॥ १७०

---

1. for मां to save metre

*तिरुक्कण्णपुरम्।*

श्रीशौरिराजाह्वयचक्रपाणिः
श्रीकण्णपुर्याह्वयया श्रिया सह।
प्रागुत्पलं नाम विमानमेत्य
श्रीनित्यकासारतटे प्रसन्नः॥ १७१

श्रीकण्णपुर्याह्वयराजधानीं
प्रविश्य विष्णुः कमलासमेतः।
उदङ्मुखस्तिष्ठति चोलदेशे
श्रीवेङ्कटेशः स्वयमाविरासीत्॥ १७२

*ः क्कण्णङ्कुडिक्षेत्रे विष्णोः प्रभावं वर्णयति।*

दामोदरो नाम हरिर्विधातु-
रग्रेऽम्बरीषादिमुनीश्वराणाम्।
कण्णङ्कुडिक्षेत्रपुरे प्रसन्नो
देव्यारविन्दाह्वयया सहासीत्॥ १७३

*तिरुकण्णमङ्गै।*

कंसारातिषु भक्तवत्सल इति प्रख्यातनामा हरिः
मार्कण्डेयमुनेश्च रोमशऋषेः प्रत्यक्षमासीत् पुरा।
ईशोऽपि स्वफलेच्छया मुनिगणैः साकं तपश्चाचरन्
श्रीभूम्यां सहितं श्रियःपतिममुं चासेवते नित्यशः॥ १७४

भक्तवत्सलपादाब्जं ये सेवन्ति नरोत्तमाः।
गर्भवासं महद्दुःखं भूयो नानुभवन्ति ते॥ १७५

उत्पलावर्तके[1] दिव्यविमाने वेदपूरुषम्।
कलये भक्तवत्सलं[2] कमलायास्तपःफलम्॥ १७६

*तिरुवालूरुक्षेत्रप्रभावमाह।*

वालूरीश्वरदेवता मणिमयप्राकारसौधैर्युता
दृष्टा चाब्धिनिकाशपङ्कजसरो मध्ये महच्चालयम्।
ग्रीष्मर्तौ च महज्जनावृतजलक्रीडोत्सवं पश्यतां
विप्राणामतितोषमत्र बहवः पश्यन्ति यात्राबलात्॥ १७७

*तिरुनरयूराख्यक्षेत्रे विष्णोः प्रभावं वर्णयति।*

प्रद्युम्नसंकर्षणवासुदेव-
दिव्यावतारेषु कृतोदयः सन्।
श्रीश्रीनिवासाख्यविमानमध्ये
श्रिया समं राजति पद्मनाभः॥ १७८

*नन्दिपुरविण्णकरम्।*

नन्दिपुराधीशविराट्
नन्दति नित्यं नमज्जनान्तस्थः।
नरपतिवन्दितचरणः
नाथमुनेर्दृष्टिविषयमापन्नः॥ १७९

चम्पकवल्या साकं
चन्दनतरुमूलमाश्रितः श्रीमान्।
चरणसरोरुहसेवां
वितरत्यनिशं चतुर्मुखादीनाम्॥ १८०

---

1. A,B: °वतके

2. A,B: भक्तजीवेयं

विमानं मन्दारं [illegible]
विविश्यासौ विष्णुः [illegible]।
विलासाद्रथ्यायां [illegible]
विशेषं संतोषं वितरति जनानां करुणया॥ १८१

*तञ्जमामणिक्कोयिल्।*

नीलमेघविराट् नित्यवासं चिरा–
दग्नितीर्थान्तिके कुन्दवल्या समम्।
सुन्दरं नामकं पुष्पकं चाश्रयन्
व्यासतातस्य च प्रादुरासीत् पुरा॥ १८२

*[illegible]वालर्।*

मणिवर्णाह्वयविष्णुः
भुजगविमाने प्रविश्य तत्तीर्थे।
रङ्गरमण्या साकं
मार्कण्डेयमुनेः प्रसन्नमुपयाति[1]॥ १८३

*तिरुक्कण्डियूर्।*

कमलसरोवरतीरे
कमलविमानं प्रविश्य कमलाक्ष्या।
कञ्जदलाक्षः कृपया
कस्य च शम्भोः प्रसन्नतां प्राप॥ १८४

---

1. One mora extra

*तलच्चङ्कम्।*

भूदारविष्णुर्भुवि सौम्यमूर्तिः
इन्दोर्विमानं प्रियया समेत्य।
रक्ताम्बवल्ल्या सह चन्द्रतीर्थे
प्रत्यक्षमासीत् प्रियदेवतानाम्॥ १८५

*तिरुविण्णकर्।*

पुरा क्षीरनाथो विराट् भूमिदेवीं
समाश्रित्य लक्ष्मीं विमानं च विन्दन्।
अहोरात्रनाम्ना प्रसिद्धिं गताया-
स्तटे पुष्करिण्याः स्वयं प्रादुरासीत्॥ १८६

*चित्रकूटाख्यस्थले गोविन्दराजस्य विष्णोः प्रभावं वर्णयति।*

श्रीचित्रकूटे नयनाभिरामे
शेषे शयानं भजतां शरण्यम्।
सुवेत्रपाणिं सनकादिसेव्यं
गोविन्दराजं प्रणतोऽस्मि नित्यम्॥ १८७

पुण्डरीकसरसस्तटजातां
पुण्डरीकव्रततीं प्रणतोऽस्मि।
कण्वनामकमुनेर्वरदानं
कर्तुमाविरभवद्धरिरादौ॥ १८८

तिल्लीवने सात्त्विकनामधेय-
विमानमध्यस्थितपार्थसारथिः।
सभापतेरिष्टवरं प्रदातु-
माविर्बभूवालयबृन्दमध्ये॥ १८९

श्रीचित्रकूटमधिगम्य पुरा मुकुन्दः
कण्वस्य तोषकृतिमाकलयन् यदाभूत्।
तत्पादतीर्थमचिरादवगाह्य शम्भुः
नम्रो बभूव हरिसेवनलालसोऽभूत्॥ १९०

*स्थलपुराणवचनानि निरूप्यन्ते।*

*पुण्डरीकसरस्तीरे विमाने सात्त्विकाह्वये।*
*तिल्लीवनसमाकीर्णे चित्रकूटे मनोहरे॥* १९१

*कण्वस्य वरदानार्थमगमत् पुरुषोत्तमः।*
*गोविन्दराजो भगवान् पुराणपुरुषोत्तमः॥* १९२

*उमापतिस्तु तत्रैव हरिदर्शनलालसः।*
*गोविन्दराजपादाग्रे स्थित्वा ताण्डवमादिशत्॥* १९३

*काळिच्चीरामविण्णकरम्।*

उपेत्य पाटलीवनं त्रिविक्रमः स्वयं हरिः
श्रियं च लोकनायकीं विभूषणैर्विभूषिताम्।
प्रशस्तनिर्मलोदकं प्रतीतशङ्खतीर्थकं
प्रकाशयन् स्वतेजसा प्रसिद्धिमावह क्षितौ॥ १९४

*तिरुवेन्तलूरु।*

परिमलरङ्गसमेतां[1]
पङ्कजवल्लीमुपास्य परमेष्ठी।
प्रयतसुधांशोस्तीर्थे
प्रातःस्नानात् प्रसन्नचित्तोऽभूत्॥ १९५

---

1. A,B: परिमेल°

वेदंपूत्तविमाने
प्रविश्य विष्णुर्भुजङ्गशयनः सन्।
विनतानवितुं कृपया
विधिविधुपुरतः प्रसन्नगात्रोऽभूत्॥ १९६

*सिरुपुलियूर्।*

मामकळ् देवियोडे
माधवनंक्के पांपुमेल् पळ्ळिकोंडान्।
मम चाशु व्याघ्रपुर्या
मनुजाभीष्टं कुडुक्कवंत्तिरुक्कार्॥ १९७

भक्तिसारं मुनिं भक्तिहीनाः द्विजाः
वेदपाठं परित्यज्य तूष्णीं स्थिताः।
शेषशायी हरिस्तन्मुखासक्तवान्
तत्कृते संविदं तेषु चोत्पादयत्॥ १९८

*तिरुवल्ल्यङ्कुडि।*

दण्डधनुष्मान् रामो
मरकतदेव्या समाश्रितो देवैः।
शुक्रसरोवरभूम्या-
मुत्पलसंज्ञं विमानमुपयाति॥ १९९

*तिरुनाङ्कूरुक्षेत्रे एकादशमाधवक्षेत्राणि वर्णयति।*

नन्दादीपघटप्रनर्तकमहाकारुण्यरक्ताम्बर[1]-
श्रीनारायणपूरुषोत्तमपतिश्रीनाथकूटाधिपान्।
वैकुण्ठेश्वरमाधवौ च कमलानाथं च गोदापतिं
नौम्येकादश नागपुर्यधिपतीन् सार्धं कलिध्वंसिना॥ २००

*नन्दादीपप्रभावमाह। मणिमाडक्कोयिल्।*

नन्दादीपहरिर्नवीनभवने नन्देन संपूजितो
नानाभूषणभूषितां प्रियसखीमासाद्य तुष्टोऽप्यसौ।
श्रीवत्सान्वयवादिभीकरमहाचार्योत्तमैः प्रागसौ
श्रीवैकुण्ठपतिर्यदा सुरगणैः संपूजितो वर्तते॥ २०१

रत्नैर्विनिर्मितनिकेतनमध्यरङ्गे
ओंकारनामकविमानमुपेत्य देव्या।
यः पुण्डरीकलतया सममम्बुजाक्षः
प्रत्यक्षमाप बहुरुद्रगणाधिपानाम्॥ २०२

*घटप्रनर्तकस्य विष्णोः प्रभावं वर्णयति। वैकुन्तविण्णकरम्।*

घटप्रनर्तकः स्वयं निरंन्तरं शुभं नृणां
समेधितुं प्रसादतः प्रपन्नपण्डितैः समम्।
प्रभावलेशशंसिनां प्रसन्नबुद्धिमादिशन्
प्रसिद्धपट्टणे भृशं प्रकाशते श्रियःपतिः॥ २०३

1. A,B: °म्बक-

वैकुण्ठनाथो वरलक्ष्मितीर्थे
वैकुण्ठदेव्या सह वारिजाक्षः।
वासं प्रकुर्वन् वरसेतुराज्ञः
वरं ददौ वारिधितीरजानाम्॥ २०४

*महाकारुण्यपूर्णस्य भगवतः प्रभावमाह। अरमेयविण्णकरम्।*

कारुण्यनामकहरिः कमलासमेतः
काकोदरेन्द्रशयनः कमलारुणाक्षः।
काम्यार्थमर्थिषु नृपेषु जयं कवीनां
कान्तां गिरं च कुरुते कमलासनेड्यः॥ २०५

कपटनाटकनामहरिः स्वय-
ममृतसिन्धुलताह्वयभार्यया।
विमलपुष्करिणीतटवासिनं[1]
भृगुमहर्षिमवेक्ष्य वरं ददौ॥ २०६

*रक्ताम्बरस्य विष्णोः प्रभावं वर्णयति। तिरुत्तेवनार्तोकै।*

रक्ताम्बर इति विष्णुः
वितरत्यनिशं मनोरथान् श्रेयः।
रमया प्रेरितकृपया
राज्ञां राज्यं शुभानि चास्माकम्॥ २०७

माधवशौरिर्देवसभाया-
मब्धिसरोवरमध्यासीनः।
शुभकृन्नामविमानं गत्वा
सागरवल्या सह चिक्रीड॥ २०८

1. A,B: °ष्करणी°

*नारायणस्य प्रभावं वर्णयति। वन्पुरुषोत्तमम्।*

श्रीनारायणदेवः
श्रितजनसंतोषमादरात् कुर्वन्।
श्रेयांस्यनिशं कलयन्
शतमघवन्द्यः श्रिया समं शेते॥ २०९

नारायणः श्रितजनप्रियदानशीलः
ओंकारनामकविमानमुपेत्य देव्या।
लक्ष्म्या समं भुजगतीर्थतटे स्थितः सन्
चन्द्रस्य दृग्विषयमाप सुरेन्द्रवन्द्यः॥ २१०

*पुरुषोत्तमस्य भगवतः प्रभावमाह। शेम्पोङ्जिकोयिल्।*

अयं स पुरुषोत्तमः सकलदेववन्द्यः सदा
महर्षिभिरुपासितस्त्रिजगतां प्रमोदं दिशन्।
प्रभाकरनिशाकरज्वलितदेहकान्त्या युतां
श्रियं च परितोषयन् मम शुभप्रदो वर्तते॥ २११

क्षेत्रेऽस्मिन् पुरुषोत्तमः त्रिजगतां संतोषमुत्पादयन्
प्रत्यक्षं गतवान् श्रिया सह पुरा प्राचेतसे योगिने।
मोक्षार्थं मुनिपुङ्गवाः पृथुसरस्तीरे तपोवर्त्मना
तिष्ठन्त्यत्र महात्मभिः सुरगणैः संमानिताः संघशः॥ २१२

*श्रीनाथकूटस्य विष्णोः प्रभावमाह। तिरुत्तत्तिअम्बलम्।*

श्रीनाथकूटाह्वयशार्ङ्गपाणिं
श्रिया ज्वलन्तं श्रयतां शरण्यम्।
सेव्यं मुनीन्द्रैः फणिभोगशायिनं
नमाम्यहं नागपुरीनिवासिनम्॥ २१३

[illegible] हरिः [illegible]
[illegible]विमाने [illegible]
इन्दिर[illegible] [illegible]
मादृशान् रक्षितुं सततं [illegible] २१४

*मणिकूटवासिनः भगवतः प्रभावमाह। तिरुमणिकूटम्।*

मणिकूटवासिनमहं सतत
मनसा स्मरामि मनुजार्तिहरम्।
मधुकैटभान्तकमुपेत्य पुमान्
मनुजाधिपो भवति तत्कृपया॥ २१५

वैकुण्ठेशो वसति मणिकूटाभिधो श्रीसमेत
प्रासादाख्ये दिनमणिनिभे व्योमयाने निषण्णः।
प्रालेयांशोर्हृदभिलषितं सत्यवत्यात्मजस्य
दातुं देवैर्विनुतमहिमा चन्द्रतीर्थस्य तीरे॥ २१६

*माधवनामकस्य विष्णोः प्रभावं वर्णयति। कावलम्बाडि।*

माधवनामा विष्णु–
र्मनुजकृतिं श्रोतुमादरादत्र।
मदमोहगर्वितानां
मनुजानामपराधरक्षकोऽभूत्॥ २१७

विमानमुत्तुङ्गमुपेत्य विष्णुः
श्रीहेमकासारसमीपभूम्याम्।
अमित्रजस्यान्वहमश्वसेतोः
प्रत्यक्षमासीद्रमया समेतः॥ २१८

---

1. A,B: °सरसस्तटे

2. A,B: तुरुम°

*कमलानाथस्य विष्णोः प्रभावं वर्णयति। तिरुवल्लक्कोलम्।*

कमलानाथः कलियुगदिवसे
कतिपयनॄणां कामितफलदः।
कतिपयपुंसां काञ्चनपदवीं
कवनमनीषां वितरत्यनिशम्॥ २१९

श्रीनारायणदेवराड्वनतले मानुष्यलीलां वहन्
आदौ श्वेतह्रदं प्रविश्य भगवान् लक्ष्म्या समं पुष्पकम्।
इक्ष्वाकान्वयबाहुजेषु यशसा श्वेतेति राज्ञः सकृत्
प्रत्यक्षं गतवान् प्रमोदममितं दातुं चिराद्वर्तते॥ २२०

*गो[illegible]पतेर्विष्णोः प्रभावमाह। पार्तपल्लिपाडुवान्।*

गोदापतिर्गोपकुले जनित्वा
गोविन्दनाम्ना कलिताभिषेकः।
गोगोपगोपीजनबृन्दमुर्व्या-
मन्विष्य रक्षन्निह चाविरासीत्॥ २२१

नारायणाख्यं च विमानमारा-
दारुह्य देव्या सह वारिजाक्षः।
तीरे पुरा दर्शनपुष्करिण्यां
प्रत्यक्षमासीन्नरफल्गुनस्य॥ २२२

अत्रैकादशमाधवाः प्रतिदिनं विप्रैर्महायोगिभिः
पूजां प्राप्य दिवानिशं श्रितजनान् रक्षन्ति पृथ्वीपतीन्।
तान् भक्त्या नितरां जनाश्च बहुधा ध्यायन्ति चेत् सर्वदा
तेऽस्माकं वितरन्ति भोगमनिशं युष्माकमप्यन्वहम्॥ २२३

*तिरुवालितिरुनकरी।*

विमानमष्टाक्षररूपकं हरे-
र्लक्ष्मीनृसिंहस्य च शंसनाह्वयम्।
मोक्षावहं दर्शनमात्रतः कलौ
भजन्ति ते विष्णुपदे वसन्ति॥ २२४

बिल्वारण्यभुवस्थले नरहरिः लक्ष्मीसमेतः स्वयं
प्रागष्टाक्षररूपके मणिमये दिव्ये विमाने स्थितः।
ह्लादिन्याख्यसरस्तटे निवसतः प्राज्ञान् सदा हर्षितुं
कारुण्यात् परकालयोगिवचनान्याश्रावितुं हर्षति॥ २२५

*बिल्वारण्यस्थलपुराणवचनानि विलिख्यन्ते।*

*अष्टाक्षरमयं दिव्यविमानं शंसनाह्वयम्।*
*अष्टाक्षरप्रदो विष्णुः मोदते रमया सह॥* २२६

*कावेर्याश्चोत्तरे तीरे नूपुरायाश्च दक्षिणे।*
*रोमशोदन्वतोर्मध्ये बिल्वारण्यमिति स्मृतम्॥* २२७

*बिल्वमूले स्थितो भूत्वा नरसिंहस्य संनिधौ।*
*जपेदष्टाक्षरं मन्त्रं मन्त्रसिद्धिमवाप्नुयात्॥* २२८

*तीर्थानामुत्तमं तीर्थं त्रिषु लोकेषु विश्रुतम्।*
*ह्लादिनीतीर्थमित्येतत् सर्वपापप्रणाशनम्॥* २२९

*तत्क्षेत्रवासिनो नरसिंहमूर्तेर्भगवतः अन्तरङ्गभूतपरकालयोगिनः प्रभावं वर्णयति।*

कार्त्तिके कृत्तिकाजातं चतुष्कविशिखामणिम्।
षट्प्रबन्धकृतं शर्ङ्गमूर्तिं कलिहमाश्रये॥ २३०

चतुर्थवर्णेऽच्युतशार्ङ्गशक्त्या
कृतोदयं कार्त्तिककृत्तिकायाम्।
रङ्गेशकैङ्कर्यतरङ्गिताशं
चतुष्कवीन्द्रं शरणं प्रपद्ये॥ २३१

करे खड्गं धृत्वा कलुषनिचयं खण्डयति यः
कवीन्द्राणां लोके कमलपतिवद्वाघृणिचयैः।
क[illegible]ादौ कृत्वा कतिपयकृतीः कार्यमकरोत्
कति द्रव्यं दत्वा कमलदलनेत्रस्य विषये॥ २३२

रङ्गेशपादाङ्गुलिकाञ्चनोर्मिकां
करेण चाहर्तुमशक्तिमान् कलिः।
दन्तेन धार्ष्ट्येन च दंशिताङ्गुलिः
ज्ञानोद्भवात्[1] सोऽपि हरिं तमस्तुवत्॥ २३३

*रामनाथपुरप्रभावं वर्णयति।*

रामनाथपुरराजनगर्यां
रामचन्द्रमनिशं प्रणतोऽस्मि।
रम्यबाणकरकार्मुकहस्तं
लक्ष्मणेन सह वायुसुतेन॥ २३४

---

1. A,B: ग्नानो°

*धनुष्कोटिप्रभावं वर्णयति।*

सरित्पतौ धनुष्मता नवग्रहाः शिलामयाः
प्रतिष्ठिताः स्वपाणिना प्रसादकारणान्नृणाम्।
तदीक्षणं तदर्हणां तदा निमज्जनं सकृत्
करोति चेत् कलौ पुमान् धनी भवेत् स्वराडसौ॥ २३५

रामो नाम हरिः पुरा हनुमता सुश्राव्य सीतास्थितिं
पारावारतलं प्रविश्य सलिले सेतुं करोमीत्यतः।
प्राक्पाषाणनवत्वमाशु कलयन् सुग्रीवमुख्यैर्वरैः
आमन्त्र्याशु च लक्ष्मणेन सहितः तिष्ठत्यसौ सैकते॥ २३६

समुद्रमध्यवर्तिनं निशाचराधिपं सदा
सपुत्रमित्रबान्धवं मृधे निहन्तुमुच्छ्रयात्।
निशाचरं विभीषणं निहन्तुमुद्यतान् क्रुधा
निरीक्षणक्षणादसौ वलीमुखान्न्यवारयत्॥ २३७

रत्नाकरे रामनिशाकरोऽसौ
दिवानिशं कीशतमोपहारम्।
कुर्वन् प्रसादं च सरित्पतेर्नृणां
दिशन्त्यभीष्टानि ममाप्यजस्रम्॥ २३८

*रामसेतोः प्रभावं वर्णयति।*

रामेश्वराह्वयपुरी
राजति सौधैः प्रकाशते नित्यम्।

रामः शंकरसहितो
राजति तत्रैव योगिभिः सार्धम्॥ २३९

रत्नाकरान्वितमहोदधिवारिमध्ये
सीतापतिर्मनुजपापतमोपहत्यै।
सेतुं बबन्ध नलनीलवलीमुखैस्त-
मद्राक्षमत्र भवतां करुणाकटाक्षैः॥ २४०

गोपुरत्रयनिरुद्धमृगाङ्का
गोत्रभित्पुरसमानसमृद्धा।
गोपविष्णुपुरवद्गुणपूर्णा
गोकुलैः सह विभाति पुरी सा॥ २४१

रामश्चाविरभूत् पुराब्धिनिकटे रामानुजेनार्चितः
स्नानं तस्य पदोद्भवैः शुभजलैः संप्रार्थ्यते शम्भुना।
शम्भोस्तस्य च भूसुराः प्रतिदिनं गङ्गाभिषेकं चिरात्
कुर्वन्त्यत्र महेन्द्रपर्वतगतैर्मन्दारपुष्पाङ्कुरैः॥ २४२

*॥इति श्रीकैङ्कर्यरत्नावलिग्रन्थे*
*श्रीरङ्गादिदिव्यस्थलयात्रायां*
*पञ्चमोऽध्यायः॥*

## षष्ठोऽध्यायः

*पाण्ड्यदेशे[1] स्थितविष्णुक्षेत्राणि उच्यन्ते[2]।*

पूर्वाध्यायकथामपेक्ष्य[3] बहुधा विष्णुस्थलेषूत्तम-
श्रीरङ्गेशसमानकेशवकथामासेतुहैमाचलम्।
गङ्गासिन्धुमलापहारिसरितां क्षेत्रप्रभावान्वितां
वक्ष्येऽहं भवतामनुग्रहबलादत्र श्रृणुध्वं सकृत्॥ १

*दर्भशयनक्षेत्रप्रभावं वर्णयति। तिरुप्पुल्लाणि।*

फुल्लारण्ये महिषमसुरं मर्दयित्वा प्रशान्तां
देवीमारात् प्रयतमनसा साधुपृष्ट्वाथ रामः।
सिन्धोर्मूले शरणवरणं कर्तुमिच्छन् त्रिरात्रं
भूम्यां दर्भे शयनमकरोत् कीशगोष्ठ्यां प्रभाते॥ २

तद्दर्भास्तरणे स्थितो जडनिधिं रामो न पश्यन् क्रुधा
चापं चानय लक्ष्मणात्र जलधिं संशोषयिष्याम्यहम्।
पादैर्भूमितलेषु वानरगणाः क्लेशं विना यान्ति चेत्
सिन्धुः मच्चरणं गमिष्यति तदा कालीयवत्कर्मणा॥ ३

तदा रामभद्रः सदा सिन्धुघोषं
सहिष्णुः कदाचित् क्रुधाधिश्चकार।
तदारभ्य सिन्धुस्तरङ्गान् विमुञ्चन्
जनाप्लावनार्थं ध्वनिं न प्रपेदे॥ ४

---

1. A,B: °देशेषु
2. A,B add: अस्मद्गुरुभ्यो नमः। षष्ठोऽध्यायःप्रारम्भः।
3. B: °ध्यायः क°

सेतुं बन्धयितुं नलेन कपिना सिन्धोस्तटे राघवः
शैलान् प्लावयितुं महोदधिजलेष्वब्धेर्नियोगं गतः।
संतुष्टो भगवान् समाश्रितकपिं संतोषमुत्पादयन्
उत्पाट्याद्रिवरान् जले निपतितुं सुग्रीवमाज्ञापयत्॥ ५

श्रीमानब्धितटे स्थितिं विरचयन् लङ्काप्रवेशागमे
दृष्ट्वा राक्षसधार्मिकान् हरिगणानामोदयन्नञ्जसा।
अग्रे सिन्धुपतिं विभीषणमुखानाहूय संभाषयन्
आस्ते तं भुजगेन्द्रशायिनमहं ध्यायामि सीतापतिम्॥ ६

सेतुर्भूत्वा दशरथसुतः सिन्धुतोये स्वशक्त्या
तस्मिन् मार्गे स्वबलसहितो वानरैर्नीयमानः।
लङ्कां गत्वा निशिचरपतिं दारहर्तारमारा-
द्धत्वा सीतां जिगमिषुरभूद्धार्मिकः स्वानुजेन॥ ७

फुल्लारण्ये स्वस्तिकाख्ये विमाने
प्राक्फुल्लर्षैरिष्टसिद्धिं प्रकुर्वन्।
पद्मासिन्या प्राग्जगन्नाथशौरिः
प्रादुर्भूतश्चक्रतीर्थस्य तीरे॥ ८

ये पुत्रकामाः पुरुषं पुराण-
मश्वत्थमूले भजतां शरण्यम्।
सन्तानगोपालममुं भजन्ति चेत्
सत्पुत्रमारात् सततं धनाढ्यम्॥ ९

*अथ वरवरमुनेः प्रभावं वर्णयति।*

कडारेति ग्रामे कमलदलनेत्रस्य कृपया
यतीनां मुख्योऽसौ वरवरमुनिः प्रादुरभवत् ।
यमाश्रित्याचार्यं यतिवरपदाचार्यपुरुषाः
प्रसिद्धास्तिष्ठन्ति प्रथितविभवा विष्णुसदने॥ १(

तस्यालये सुन्दरराजविष्णोः[1]
सेवापराः सात्त्विककर्मनिष्ठाः।
श्रीसौम्यजामातृकृपावशाच्च
श्रीदिव्यदेशेषु वसन्ति संघशः॥ १:

शिङ्किल्नामकडार-
ग्रामे श्रीवैष्णवान् मुख्यान्।
वरवरमुनिमाचार्यं
सुन्दरराजं भजाम्यहं नित्यम्॥ १२

सोऽयं शेषांशभूतः शठरिपुकृपया श्रीनगर्यां जनित्वा
पश्चान्मातामहस्य प्रयतनिवसने सर्वविद्यां प्रगृह्णन्।
लोकाचार्योपकारात् कतिपयदिवसेष्वाश्रमं स्वीकरित्वा[2]
श्रीरङ्गे नित्यवासं प्रकटयति सदा स्तम्भमूले रहस्यान्॥ १३

*लोकाचार्यप्रभावं वर्णयति।*

लोकाचार्यगुरुं नमामि शिरसा श्रीकृष्णपादात्मजं
संसारोरगदष्टजीवनिवहप्राणप्रदं देहिनाम्।
मोक्षोपायस्मृतिं प्रकाश्य बहुधा मुक्तिं स्वयं कल्पयन्
कामक्रोधमदादिशतृनिवहान् जित्वा य आविर्बभौ॥ १४

1. A,B: °विष्णुः 2. Ungrammatical

*दक्षिणवेङ्कटाचलनाथप्रभावं वर्णयति। तिरुमालिरुंशोलै।*

श्रीमान् दक्षिणवेङ्कटाचलपतिः शृङ्गारवृक्षाश्रिते
शैले वासमवाप्य पूर्णकृपया सेवापरान् रक्षितुम्।
श्रीभूम्यां सहितः श्रितैरभिनुतः श्रीश्रीनिवासो यथा
नित्यं नूपुरगङ्गया युतपयोधाराभिरामोदते॥ १५

विमानं गाङ्गेयं विबुधमणिबिम्बैरुपगतं
विचित्रप्राकारैर्विविधमुनिबृन्दैः परिवृतम्।
विवश्यासौ श्रीमान् विविधमणिभूषाशतयुतो
विना भीतिं शैले निवसति चिराद्दस्युपकृतः॥ १६

*तिरुक्कोट्टियूरु।*

सौम्यनारायणः सर्वसंपत्करः
संविदां संपदं प्राणिनां कल्पयन्।
अष्टमूर्त्यात्मकं[1] पुष्पकं चादरा-
दाविविश्य श्रिया संयुतश्चाबभौ॥ १७

क्षीरोदकासारजलावगाहात्
करोति मोक्षं कमलासहायः।
कलौ नराणां कमलासनस्य
प्रत्यक्षमासीत् प्रमथाधिपस्य॥ १८

---

1. A,B: °त्मिकं

*सिरुपुलियूर्। चलशयनम्।*

पूर्वं व्याघ्रपुरे भुजङ्गशयने येरार् मुखत्तेंब्बिरान्
शीरार् मामकलोडुर्चे तिरुवरुं नन्नाक मां रक्षितुम्।
वैकुण्ठं च विहाय पूर्णकृपया लोकान् परीत्यादरात्
तिष्ठन्ताविह योगिभिः परिवृतौ श्रीशेषशैलान्तिके॥ १९

*तिरुमय्यम्।*

सत्याचले सत्यविमानमध्ये
सत्यर्षिणा पूजितसत्यमूर्तिः।
सत्येति कासारजलावगाहात्
सत्यव्रतानां सकलं ददाति॥ २०

*तिरुमोहूरु।*

कालमेघप्पिरान् मेघवल्ल्या समं
श्रीकरं नामकं पुष्पकं चाश्रयन्।
क्षीरकासारभूवर्तिनां योगिनां
देवतानां पुरः प्रादुरासीद्धरिः॥ २१

*तिरुत्तङ्गारु। तेन्नरङ्गम्।*

श्रीमानर्णवनायकीपतिरसौ प्राक् फुल्लपाण्ड्यावृतः
क्षेत्रे पापविनाशनाख्यसरसस्तीरे महामण्टपे।
दिव्यं चान्द्रविमानमर्कसदृशं संप्राप्य नित्योत्सवं
कुर्वन्नत्र महर्षिभिः परिवृतः पान्थान् सदा हर्षति॥ २२

*श्रीविल्लिपुत्तूरु।*

वटपत्रशायिनमुपेत्य सुराः
पटमण्टपेषु पुरुहूतमुखाः।
पटुवाग्विलासचटुलाः फणितुं
नटनर्तकैः सह वसन्ति चिरात्॥ २३

*विष्णुचित्तस्य प्रभावं वर्णयति। पेरियालुवार्।*

दिव्यज्ञानाधिकत्वाद्गुरुमुखमनवेक्ष्याह वेदान् समग्रान्
विद्याशुल्कं ग्रहीतुं नरपतिनिहितं पाण्ड्यविद्वत्सभायाम्।
साक्षाच्छ्रीरङ्गनाथश्वशुरमभिहितं पूजितं सर्वदेवैः
[illegible] तं विष्णुचित्तं द्विजकुलयमिनामग्रगण्यं नमामि॥ २४

तत्र दिव्यस्थले रङ्गमन्नाह्वयं
रत्नसिंहासने विष्णुमुद्वाह्य सा।
विष्णुचित्तात्मजा वीक्ष्य कौतूहलात्
संपदं संविदां संदधे प्राणिनाम्॥ २५

*गोदायाः प्रभावं वर्णयति।*

नीलायास्तनयुग्मसौधसदने निद्रापरं नायकं
कृष्णं प्रत्युषसि प्रबोध्य निगमान्तार्थैः स्तुवन्ती सदा।
मालाभिः स्वभुजात् प्रगृह्य नितरां भुङ्क्ते तमाराध्य या
गोदां तां प्रणमामि भक्तिभरितां श्रीविष्णुचित्तात्मजाम्॥ २६

गोदा सदा कृष्णविनोदशीला
गोपी यदा गेपकुले प्रसिद्धा।

गोविन्दपार्श्वे वसती मदीयां
गोत्राभिवृद्धिं प्रकटीकरोति॥ २७

भागीरथी सूर्यसुता सरस्वती
समेत्य ताः पुण्यसरोवरं गताः।
तस्मात्त्रिवेणीति मृकण्डुसंनुता
तस्याः प्लवं ज्ञानवतां तपःफलम्॥ २८

हेमन्ते धनुषि स्थिते दिनमणौ गोदा प्रभातेऽन्वहं
संतुष्टा चतुरन्तयानशिबिकामारुह्य घण्टापथात्।
पुर्याः पश्चिमदिक्स्थितं सुरगणैः सेव्यं तटाकं स्वयं
चाश्रित्यात्र सुहृद्गणैः परिवृता स्नात्वा व्रतान्याचरत्॥ २९

व्रतान्ते श्रीकृष्णः स्मर इव तदा प्रादुरभव-
द्वधूनामग्रे सा वरगुणपतिं प्राप्य कृपया।
प्रबन्धौ द्वौ कृत्वा प्रयतमनसा प्राक्तनकृतीः
पठन्ती श्रीपुर्यामधिवसति तेनैव पतिना॥ ३०

*अथ गोदायाः प्रभावं दण्डकरूपेण वर्णयति।*

गोदा पुरा दिव्यरूपा सदाचारनिष्ठा वरिष्ठा जगत्पाण्ड्यदेशे किटिक्षेत्रवासं समाश्रित्य धन्या। पुरे धन्विनव्ये वने विष्णुचित्तस्य मूले तुलस्याः। पृथिव्यंशभूता धरायां जनित्वा तटित्संनिकाशस्वरूपं समेत्याशु लावण्यसीमा। सदा भक्तियुक्ता स्मरं मोहयित्वा चिराद्रूपकान्त्या ततोऽभ्यर्णदेशेऽत्र वाणीपतीशादिवागीशगीर्वाणबृन्दारकानीकमध्ये समासीनमात्मेश्वरं रङ्गमन्नाह्वयं प्राणनाथं पतिं गन्तुकामा सती यथा गोपकन्याः क्वचिद्गोकुलेऽस्मिन् पुरा मार्गशीर्षे जले यामुनायामुषस्याप्लुतास्तास्तटे कुञ्जभूम्यां लतामण्टपेऽस्मिन् स्थितं चारचय्य। व्रतारम्भकाले

भरन्यासपूर्वं हृदिस्थं हरिं तं वचोभिस्तुवत्यः। कात्ययनीदेवि नन्दात्मजं नः पतिं चैककाले कुरुध्वं नमस्तेति देवीं समाराध्यभिः सांनिवेद्य स्वयं चापि भुङ्क्त्वा समाप्तौ व्रतानां सुराणां समक्षे वधूनां पुरः[1] कोटिकन्दर्पवद्भासितं मोहितं देवकीनन्दनं वीक्ष्य चालिङ्ग्य ताः तोषिताश्चाभवन्। तथेयं व्रतान्ते तत्पुरोवर्तिनं रङ्गमन्नाह्वयं विष्णुमुद्वाह्य सा विष्णुचित्तात्मजा वेदघोषैः समं वै विवाहक्रियाम्। वर्धयन्तं विभुं नन्दयित्वा ततः तेन साकं प्रिया। एकशय्यासने[2] भर्तुराज्ञावशात् प्रबन्धद्वयं च स्वयं कल्पयित्वा तदर्थं बुधानां प्रकाश्य प्रकामम्। वेदसारान् बहून् साधुभिः संगता संगृहीत्वानिशं सत्कथालापनैः सम्यगष्टाक्षरं साधयन्ती सतांसंमता संस्थिता। योगिनामग्रतः सर्वलोकेषु याः सर्वदा पावनाः तास्तटिन्यः सकृत्पुण्यतीर्थाश्रयात् कीर्तिकामा गताः ऋषीणां प्रसादात् पुरेऽस्मिन् तटाके प्रविश्यातिहृष्टाः। सुकीर्तिं गताः स्युस्तदारभ्य गोदा त[illegible]त्संनिकाशा[3] सरित्संनिवेशा त्रिवेणीति नाम्ना प्रसिद्धे तटाके वराषाढमासे जलक्रीडनार्थं प्लवोद्धर्षकामा सदा योगिवर्यैः समेतस्य भर्तृप्रतीकं स्वकीयं परिष्कृत्य पश्चात् स्वभुक्तेन माल्येन भूषाशतेनाप्यलङ्कृत्य भक्त्या। दिनान्ते सरस्यां विहृत्य त्रिरात्रम्। तदाषाढमासे शुभे शुक्लपक्षे ध्वजारोहणादिप्रसिद्धोत्सवान्ते पृथुस्यन्दनेन प्रतोल्यां चरन्तीम्। त्वामिमां सेवितुं प्राकृतानागतान् मादृशान् रक्षितुं बद्धकच्छा सती योगिभिः प्रार्थिता भक्तिमुक्तिप्रदा सर्वदेशेषु च श्रीपतेः संनिधौ। गोपतेरर्चनां कर्तुमिच्छावती। द्राविडेऽस्मिन्नियं दिव्यदेशान्तरे। वेङ्कटाद्रावधःस्वर्णनद्यास्तटे विद्यमाने पुरे दिव्यरूपंगता गोपतेः संनिधौ चिन्तितार्थप्रदा। वैष्णवानां नृणां योगिनामुत्सवं कुर्वती सर्वदा। नाथयोगीपुरे नाथवर्यात्मजे कृष्णदासेऽथुना राघवाज्ञावशान्नन्दसूनुं गृहाराधनं कुर्वती नित्यशस्तत्कृपाहेतुना तेन चाकल्पिते दण्डके सर्वदा संस्तुता साधुभिः सेविता विष्णुचित्तात्मजा वर्तते सा चिरात्॥

॥गोदादण्डकं समाप्तम्॥ ३१

1. A,B: पुरस्तात् 2. A,B: चैक° 3. A,B: तटित्स°

*तेन्मधुरै। कूटलळकर्।*

मधुरेति राजधानी
मनुजमहीभृद्भिरादृता नित्यम्।
मदनस्य मातुरासी-
न्मन्दिरमनिशं मनाक् च मीनाक्ष्याः॥ ३२

माधवोऽत्र मधुरापुरवासी
मध्यगः शिवविरिञ्चिसुराणाम्।
मङ्गलं कलयितुं मनुजानां
मन्दमन्दमुपसीदति विष्णुः॥ ३३

वह्न्याभिधानसरितस्तटजातवृक्षे-
ष्वासन्नभृङ्गनिवहाः मधुरस्वनेन।
श्रीशौरिराजमधुनात्र निशावसाने
प्राचोदयन्त्यनुदिनं सुरवन्दिबृन्दैः॥ ३४

शौरिराजमनुपश्यति लोके
यः पुमान् सकलपापनिवृत्त्यै।
निर्मलः सुखमवाप्य च हृष्टः
तत्पदं समुपयाति समग्रम्॥ ३५

*श्रीनगरीप्रभावं वर्णयति। आळ्वार् तिरुनगरि।*

पोलिन्तनिन्नेति विराट् चतुर्भुजः
श्रीभूमिनीलामहिषीभिरादृतः।
विशेषचौर्याद्वितयेन चासकृ-
द्विराजते शौरिसुतेन संनुतः॥ ३६

पुरा मृकण्डुसूनवे भृगोर्मनोरथं दिशन्
विमानमादिनामकं विधातृकल्पितं पुरा।
विचित्रगोपुरैर्वृतं वितानमण्टपैर्युतं
विचित्रसौधसंयुतं विलोक्य चाविशद्धरिः॥ ३७

*तस्मिन् पुरेऽवतीर्णस्य शठकोपयोगिनः प्रभावमाह।*

भक्तानाममृतप्रदं बुधजनानन्दावहं सर्वदा
सर्वेषां सकलार्थदं शठरिपुप्रख्यातवाचोमयम्।
शाखानां च सहस्रशोपनिषदामाधारभूतं सदा
श्रीमद्द्राविडवेदसागरमहं मूर्ध्ना नमाम्यन्वहम्॥ ३८

त[illegible]पर्णीतटे तत्त्वदर्शी मुनिः
प्रादुरासीत् पुरा तिन्त्रिणीमूलतः।
यः शठारिं सकृद्वन्दनं याति चे-
द्भक्तिमान् भूतले पूर्णकामो भवेत्॥ ३९

आचार्याणां पूर्व-
मागमसारानवेक्ष्य विशदार्थम्।
आगमसारविदां गोष्ठी-
ष्वग्रे नित्यं वसन्तमहमीडे॥ ४०

श्रीपराङ्कुशविलासमण्टपे
श्रीधरैर्नवभिरादृतः सती[1]।
श्रीमतां विजयहारमध्यगः
श्रीकरस्तु तरुवद्विभात्यसौ॥ ४१

---

1. Ungrammatical syntax

श्रीनगरीस्थलपुराणवचनानि विलिख्यन्ते।

ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी।
कावेरी च महाभागा प्रचलति[1] महानदी॥ ४२

ये पिबन्ति जलं तासां मनुजा मनुजेश्वर।
तेषां नारायणे भक्तिः भूयसी निरुपद्रवा॥ ४३

कृतेऽत्रिसूनुर्भगवान् त्रेतायां रघुनन्दनः।
द्वापरे नन्दसूनुश्च कलौ देवः पराङ्कुशः॥ ४४

ताम्रपर्ण्युत्तरे तीरे दान्तः क्षेत्रे जनिष्यति।
निर्निद्रतिन्त्रिणीशत्वं गत्वात्र भुजगाधिपः॥ ४५

सर्वाभिलाषः सर्वेषां नित्यमेव प्रदास्यति।
शठकोपमुनीन्द्रत्वं भविष्यति खगेश्वरः॥ ४६

संप्राप्य भूमिं सर्वत्र रक्षिष्यति कलौ जनान्।
अत्र वेदाः समस्ताश्च द्राविडत्वमुपागताः॥ ४७

वेदयिष्यन्ति देवेशं कलावपि च माधवम्।
अस्ति पाण्ड्ये महादेशे मधुरानगरी शुभा॥ ४८

ताम्रपर्णीनदीतीरे साक्षाद्दृष्टो ह्यधोक्षजः।
द्वितीये तु परार्धे तु दिने त्वाद्ये तु सत्पमे॥ ४९

मन्वन्तरे वर्तमाने त्वष्टाविंशे चतुर्युगे।
कलेरादौ मासि माघे[2] काव्यवारे कुळीरगे॥ ५०

1. A,B: °लन्ती 2. A,B: माधे

एको विष्णुपदे नवत्ववपुषा तिष्ठन् प्रियाभिः पुरा
पश्चात्ताम्रनदीतटेष्वपि तथा रूपाणि गृह्णन् बहु।
तत्रत्यान् कुरुकापुरस्थितिजुषः सेवापरान् रक्षितुं
कारुण्यात् कमलापतिः कतिपयग्रामेषु विद्योतते॥ ५६

वैकुण्ठनाथो वसुधातलेऽस्मिन्[1]
वैकुण्ठदेव्याश्रितवामभागः।
वरं प्रदातुं वलवैरिणोऽत्र
विधोः सरस्तीरमुपैति नित्यम्॥ ५७

*वरकुणमङ्गै।*

विजयकोटिविमानमुपाश्रयन्
करकपुष्करिणीतटवासिनम्[2]।
वरगुणाख्यवधूं वरभूषणां
वरजयासननामहरिर्बभौ॥ ५८

*काशिनवेन्तर्।*

काशिनवेन्तर् मलर् मार्ववधूं
वरुणसरोवरतीर्थप्रान्ते।
वरुणस्याखिलसौख्यं दिशतुं
विबुधविमानं प्रतिजग्राह॥ ५९

*तुलविल्लिमङ्गलम्।*

करुविडंकण्णिनाच्चार्
अङ्गे पूर्वं देवनाथं विवाह्य।

1. A,B: °तेऽस्मि
2. A,B: °ष्करणी°

भर्ता वोडेशेन्दुकुमुदं विमानं
गत्वानन्दं स्वाश्रितानां कुडुत्ताळ्॥ ६०

*शिरिवरमङ्गै।*

पङ्कजलोचनविष्णुः पूर्वं
पद्माक्ष्या सह पद्मविमाने।
शक्रसरोवरतीर्थे तस्य
प्रत्यक्षोऽभूत् प्रणतानवतुम्॥ ६१

*पेरुंकोलम्।*

कल्लप्पिरान् खड्गधरो मुकुन्दः
सन्तानवल्लीं समुपेत्य तिष्ठन्।
आनन्दसंज्ञं निलयं प्रविश्य
विभात्यसौ नित्यसरोपकण्ठे॥ ६२

*तिरुक्कोवलूरु।*

निक्षिप्तवित्तो नितरां रराज
श्रिया समं श्रीकरनामपुष्पके।
धनाधिपस्यातिमुदं प्रकुर्वन्
श्रीताम्रपर्णीतटमाश्रितानाम्॥ ६३

*तेन्तिरुप्पेर्। रेट्टतिर्पुति।*

मकरायितकर्णभूषणो
महिषीं प्राप्य महत्स्थले भवस्य।

मधुवित् सितशङ्खतीर्थतीरे
रमया भद्रविमानमध्यरुक्षत्॥ ६४

*तोताद्रीशप्रभावं वर्णयति।*

मूर्ध्ना व्योमगिरिं नमामि शिरसा वृक्षैर्बृहद्गोपुर-
प्राकारैः सहितं विमानमतुलं दिव्यालयालङ्कृतम्।
अभ्यर्णेऽब्धिनिकाशमन्तरमृतं पङ्कारविन्दाह्वयं
कासारं यतिशेखरस्य च मठं ज्ञानामृतप्रापकम्॥ ६५

इयं पुरा हरिप्रिया वृषाचले प्रतिष्ठिता
नभोगिरेर्यतीशितुः सुता सती कदाचन।
वृषाद्रिनाथसंमतेर्विवाहितापि विष्णुना
विशेषवस्त्रभूषणैर्विभूषिता विराजते॥ ६६

प्रायो देवशिखामणिः विजयते ब्रह्मेन्द्ररुद्रादिषु
प्रत्यक्षं गतवान्नभोगिरितटे सर्वार्थसिद्धिप्रदः।
नन्दावर्तविमानमद्भुततरं संप्राप्य नित्योत्सवं
स्वीकुर्वन् श्वशुरेण तेन यतिना संपूजितः सर्वदा॥ ६७

वरगुणदेवीं वन्दे
वचनविलासैश्च तोषिताम्।
पत्युर्वरकृतवस्त्राभरणै-
र्वन्दितयोषां वरिष्ठसुरनाथाम्॥ ६८

तोताद्रिविष्णोरभिषेकतैल-
कूपस्य बिन्दोर्ग्रहणं जनानाम्।
ज्ञानप्रदं ज्ञानवतां विशेष-
मोक्षप्रदं स्याद्भुवि वैष्णवेषु॥ ६९

मठं विद्वच्छ्रेष्ठैर्मलयगिरिवन्मान्यममरैः
क्वचित्तोताद्रीशोऽप्यधिवसति हेमन्तदिवसे।
परिव्राट् तत्रत्यान् जगति बहुधा संश्रितजनान्
पवित्रीकुर्वन्नप्यनवरतमत्रैव वसति॥ ७०

*तोताद्रिस्थलपुराणवचनानि विलिख्यन्ते।*

*च[illegible]सूर्यावुभे पार्श्वे चामरग्राहिणी शुभे।*
*मार्कण्डेयभृगू[1] स्थाप्यौ[2] लक्ष्मीः सेनापतिर्महान्[3]॥* ७१

*संयुक्तास्तेन सिद्धार्थाः युगपत् पार्श्वतो हरेः।*
*आविर्भूतः स्वयं देवः रोमशस्य मुनेस्तथा॥* ७२

*पङ्क्तामरसं नाम क्षीराब्धेरत्र चाविशत्।*
*श्रीवल्लिरङ्गकं नाम पुरं वैकुण्ठमेव तत्॥* ७३

*स्वयं व्यक्तेषु सर्वेषु तोताद्रिस्थलमुत्तमम्।*
*अतश्चाहं वसाम्यत्र समस्तफलसिद्धये॥* ७४

---

1. A,B: °भृगु 2. A,B: स्थास्यौ 3. A,B: °र्मही

अथ कुरङ्गक्षेत्रप्रभावो वर्ण्यते। तिरुक्कुरुङ्गुडि

तिरुक्कुरुकुडिस्थले वराहरूपधृक् पुरा
यमस्य दण्डभारवं निशम्य रोषमावहन्।
प्रियं विधातुमादरात् प्रदीनचेतसां नृणां
प्रशस्तयोगिभिः समं प्रकाशते श्रियःपतिः॥ ७५

द्युमणिमण्डलमध्यगतो भवान्
दनुजमण्डलमद्य विनाशितुम्।
विबुधमण्डलमादरितुं सदा
शिखरिमण्डलमध्यमुपैति च॥ ७६

कारण्डकासारतटे जनार्दनः
कर्णाटभूभृद्भिरभीक्ष्णमादृतः।
काम्यार्थदः कल्पतरुर्यथा नृणां
कति स्थलेष्वाविरभूद्विशेषतः॥ ७७

श्रीमानद्रिवरे वराहवपुषा प्रागाविरासीद्धरिः
पश्चाद्भूमितले मृकण्डुजभृगुत्र्यक्षाब्जभूसंनुतः।
कार्तिक्यां निशि चैकदावनितले मातङ्गगानारवं
श्रुत्वा तस्य मनोरथेन च समं यक्षस्य मोक्षं ददौ॥ ७८

कुरङ्गक्षेत्रस्थलपुराणवचनानि विलिख्यन्ते।

श्रीरङ्गं विष्णुशयनं[1] श्रीमुष्णं श्रीनिकेतनम्।
कृष्णक्षेत्रं कुरङ्गं च सह्यं चामलकं महत्॥ ७९

---

1. A,B: शयानं

स्वयं व्यक्तानि चैतानि सप्त क्षेत्राणि वै मुने।
तेषां मध्ये कुरङ्गाख्ये क्षेत्रे संनिहितो हरिः।
विष्णोरर्चाविधिस्थानात् कुरङ्ग इति विश्रुतः॥ ८०

पाण्ड्यदेशे वर्तमानविष्णुस्थलान्युक्त्वा ततः मलयालदेशे[1] विद्य-
मानत्रयोदशविष्णुस्थलान्युच्यन्ते[2]। आदौ अनन्तशयनक्षेत्रप्रभावं वर्ण्यते।

अनन्तशयनस्थले पृथुलविग्रहत्वान्नृणा-
मभीष्टमभिवीक्षणं भगवतः प्रयासाधिकात्।
जनार्दननिधोस्तदा भवति देहिनां कृच्छ्रतः
पितामहमुखादयः प्रमुदिता बभूवुर्भृशम्॥ ८१

अनन्तनाम्नाश्रितपद्मनाभः
श्रीहेमकूटाख्यविमानमध्ये।
ब्रह्मेन्द्ररुद्रादिभिरर्च्यमानो
देव्या समं सत्यसरोऽन्तिकेऽभूत्॥ ८२

जनार्दनप्रीतिमतीव पैतृके
जगत्सु कुर्वन्ति सहस्रशो जनाः।
तिलाक्षतैर्मिश्रितशीतलोदकैः
क्षेत्रेषु सर्वत्र पवित्रपाणयः॥ ८३

---

1. A,B: °देशेषु 2. A,B: °च्यते

*तिरुवण्पुरुषोत्तमम्।*

मरुमार्वाख्यहरिः प्रा-
गिन्द्रविमाने प्रसन्नकमलाक्ष्या।
लक्ष्मणसरसस्तीरे
गरुडस्याक्ष्णोः प्रसन्नतां प्राप॥ ८४

*तिरुक्कार्क्करै।*

तीर्थं कापिलसंज्ञकं[1] मुनिवरं तन्नामधेयान्वितं
शल्वन्नाम हरिः पुराणपुरुषः संप्रेष्य संतोष्य च।
शल्वाख्यां सहधर्मिणीं प्रियसखीमुद्वाह्य धात्रा कृते
याने पुष्करनामके मणिमये तिष्ठन् सदा हर्षति॥ ८५

*तिरुमूलिक्कलम्।*

तिरुमूलिक्कलत्तान् प्राङ्मधुवेण्या समाश्रितः।
हारीतमुनियोऽडेवन् पृथुतीर्थतटं गतः॥ ८६

विमानं मन्दारं विधिशिवसुरेन्द्रादिविनुतं
विविश्यासौ विष्णुर्विविधमणिभूषाम्बरधरः।
विलासाद्रथ्यायां विभुवरशतेनाप्यनुगतः
विशेषं सन्तोषं वितरति जनानामभिमतम्॥ ८७

*कुट्टनाट्टुत्तिरुप्पुलियूर्।*

मायावी पुरुषोत्तमः प्रतिदिनं शम्भोरभीष्टं दिशन्
पूर्वं पूंशोनैतीर्थमर्जुनगतिं संदिश्य पूजाविधौ।

1. A,B: °संज्ञिकं

पुंसूक्ताख्यविमानमध्यमगतः श्रीव्याघ्रपुर्यां सदा
सप्तर्षीननुगृह्य पूर्णकृपया लक्ष्म्या समं राजते॥ ८८

*तिरुच्चङ्गण्णूर्।*

मयद्दरनामा मधुलिट्छौरिः
कमलव्रतत्या सह कञ्जाक्षः।
शङ्खसरोवरनिकटे श्रीमा-
नमरगणानामददान्मोक्षम्॥ ८९

भस्मासुरवरदानात्
भयगतशम्भोः[1] सुखार्थमुदभूत्वा।
अवनिसुराणाममृत-
मददाद्भूम्यामनन्तमूर्तिः सन्॥ ९०

*तिरुनावाय्।*

कमलसरोवरतीरे
वेदविमाने प्रविश्य विधिमान् यः।
नरनारायणदेवः
कमलाप्रीत्यै वसत्यहो नित्यम्॥ ९१

*तिरुवल्लवाल्।*

कोलप्पिरान् नाम पुराणपूरुषः
गोविन्दनाम्ना प्रथितं विमानम्।
संश्रित्य पूर्वाभिमुखः प्रजाना-
मारोग्यमुत्पादयितुं प्रसन्नः॥ ९२

---

A,B: °गतः शम्भोः

घण्टाकर्णसरोवरस्य निकटे संप्राप्य नारायणः
तन्नाम्ना प्रथितस्य योगिनृपतेर्मोक्षार्थमाविर्बभौ।
पान्थान् दीनजनानवेक्ष्य कृपया प्रीतः सदा रक्षितुं
पापेभ्यः प्रविमुच्य मोक्षपदवीं संदर्शयन् प्राणिनाम्॥

*तिरुवन्वण्डूर्।*

श्रीमान् वण्डुपुराधिपः क्षितितले रंपासरस्तीरगो
विष्णुः नारदयोगिदृग्विषयतां संप्राप्य तं हर्षयन्।
आदौ देवविमानमम्बरचरं प्रीत्या प्रविश्य स्वयं
देवीमर्णवनायिकां प्रियसखीमासाद्य चाविर्बभौ॥

*तिरुवाट्टारु।*

मलर्मङ्गैदेवीं समाश्रित्य विष्णुः
पुरा केशवाख्यो भुजङ्गे शयानः।
कडल्लारुतीर्थङ्करै वेष्टमूर्तिः
विमाने स्थितः सन् विधोर्नेत्रमाप॥

*वित्तवक्कोट्टम्मा।*

अभयप्रदानदेवः
पद्मासनया समाश्रितः श्रीमान्।
तत्त्वाभिख्यविमाने
भुजङ्गशयने सुखेन निद्राति॥

वित्तवक्कोट्टम्मा
विष्णुश्रेष्ठो समस्तभूतेषु।
वीरेषु योगिनृपतेः
प्रत्यक्षोऽभूत् सुदर्शनतीर्थे॥ ९७

*तिरुक्कडित्तानम्।*

प्राक् पुण्यकोटयाख्यविमानमध्ये
नारायणः प्रादुरभूत् कृपालुः।
रुक्माङ्गदस्यातिमुदं प्रकुर्वन्
भूतीर्थतीरे सहकल्पवल्या॥ ९८

*तिरुवारन्वलै।*

पाम्पणयानिति विष्णुः
पद्मासनया समाश्रितः प्रीतः।
वामननामविमाने
वेदव्याससरोऽन्तिके विशति॥ ९९

*अथ कुलशेखरयोगिनः प्रभावमाह।*

श्रीवासं कुलशेखरः क्षितितले दिव्यप्रबन्धैः सदा
स्तोतुं योगिगणस्य संमतिबलादारुह्य शेषाचलम्।
आपादादिकिरीटमङ्गमनिशं स्तुत्वापि हृष्टात्मना
शेते गेहालिकाशिलासु रजतद्वारेऽग्रतः[1] श्रीपतेः॥ १००

---

1. A,B: रजित०

*तिरुवञ्जिक्कलम्।*

श्रीविष्णुचित्तादरणीयरूपः
वटस्य पत्रस्य पुटे शयानः।
मण्डूकमौनीन्द्रतपःप्रभावा-
द्विष्णुः स्वयं चाविरभूत् कृपालुः॥ १०१

*एवं मलयालदेशे[1] वर्तमानत्रयोदशविष्णुस्थलान्युक्त्वा (उत्तरदेशे स्थितविष्णुक्षेत्राणि वर्णयति। आदौ) यादवगिरिप्रभावं वर्णयति। तिरुनारायणपुरम्।*

यदुशैलनायकमहं कलये
यतिसार्वभौमगुरुणा सहितम्।
यमिनां पुरातनफलादुदितं
यवनान् विजित्य पुरमध्युषितम्॥ १०२

आनन्दनिलयसंज्ञ-
मारुह्यासौ विमानमतितेजः।
यदुगिरिदेव्या साकं
यादवशैले प्रपन्नमुपयाति॥ १०३

प्राग्देवतीर्थं प्रणतैरुपास्यं
वैकुण्ठतीर्थं वनजाक्षहृद्यम्।
सदाम्बुतीर्थं सकलानवन्तं
पराशरं प्राणभृतां शरण्यम्॥ १०४

1. A,B: °देशेषु

हृत्पद्मतीर्थं पयसा समं नृणां
सुखं ददात्यापदि लोकपानम्।
प्रागष्टतीर्थान्यमरैः कृतानि
कोदण्डतीर्थेन समं विरेजुः॥ १०५

कल्याण्याख्यसरोवरः कतिपयक्षेत्राच्युतैरावृतः
कञ्जाक्षस्य कृपारसः कलियुगे काम्यार्थसिद्धिप्रदः।
कान्तं स्वं यदुशैलनायकमणिं संतोषयित्वा सदा
कासारैः सह चाष्टभिः परिवृतः कैवल्यदः प्राणिनाम्॥ १०६

यदुशैलेशमहिम्ना
यतिपतिरद्यापि शोभते नित्यम्।
यवनान् विजित्य बहुधा
यदुशैलेशः प्रतिष्ठितो येन॥ १०७

चन्दनवनमध्यस्थः
चम्पककुसुमैरलङ्कृतः श्रीमान्।
चतुराननकृतभूषां
शिरसि मुहूर्तं दधाति तार्क्ष्यस्थः॥ १०८

संपत्कुमारः सततं जनानां
हर्षं प्रकुर्वन्नधुनापि नित्यशः।
स्वपादमध्ये यवनस्य पुत्री–
मङ्गीचकाराश्रितवत्सलत्वात्॥ १०९

*श्रीरङ्गपट्टणप्रभावं वर्णयति।*

श्रीरङ्गपट्टणगतं पररङ्गनाथं
श्रीमच्छठारिमुनिभाषितगानवाग्भिः।
श्रीवैष्णवैः प्रभुवरैश्च सदा स्तुवन्तं
श्रीशं यतीन्द्रविनुतं शरणं भजामि॥ ११०

*अथ धर्मपुरीप्रभावमाह।*

गोदावर्याः पश्चिमे धर्मपुर्या-
माविर्भूतः प्राङ्नृसिंहः प्रसिद्धः।
प्रह्लादस्य प्रत्ययार्थं स्वयंभूः
दैत्यं हन्तुं सैकतस्तम्भमध्यात्॥ १११

*अथ गोकर्णक्षेत्रप्रभावमाह।*

गोकर्णस्थलमेत्य पाण्डवसुतः श्रीकण्ठपूजाबलात्
पूर्वं रैवतकं प्रविश्य यतिवद्वेषं समाश्रित्यसौ[1]।
श्रीकृष्णस्य हलायुधस्य भगिनीमामन्त्र्य चोद्वाहितुं
पूजाव्याजबहिःस्थितां प्रियसखीं प्रत्यग्रहीत् तं नमः॥ ११२

*अथ पाण्डुरङ्गक्षेत्रप्रभावमाह।*

पाण्डुरङ्गस्थले पर्वते श्रीविठ्ठल्-
व्यासमूर्तिर्हरिः द्वैतमुख्यैर्जनैः[2]।

---

1. for °त्यासौ

2. A,B: °मुख्या जनैः

प्रार्थितः प्रागसौ भीमनद्यास्तटे
रुक्मिणीकामुकः प्रादुरासीत् पुरा॥ ११३

*अहोबलस्थलमाहात्म्यमाह।*

अहोबलं महास्थलं महीधरेष्वभूदिदं
वनौकसां निरामयं वचोभिरादृतं सताम्।
वनस्थलप्रकाशकं नृसिंहरूपिणं हरिं
नमन्ति चेत् सकृन्नराः भजन्ति तत्पदं जवात्॥ ११४

लक्ष्मीनृसिंहं ललिताब्जनेत्रं
गुहाविमानं गुणिनां निदानम्।
प्रह्लादशत्रोः प्रकटीकृताङ्गं
वन्द्यं मुनीन्द्रं वरदं प्रपद्ये॥ ११५

भवनाशनाख्यतीर्थे
स्नानं कृत्वा जना गुहान्तस्थम्।
सेवन्ते यदि विष्णुं
पश्चात् पश्यन्ति तत्पदं लोके॥ ११६

*पिनाकिनीनदीप्रभावमाह। उत्तरपिनाकिनी।*

पिनाकिनीनदी पुरा पितामहादिभिर्नुता
प्रदीनचेतसां नृणां प्रसन्नबुद्धिकृत् सदा।
प्रशस्तवालुकायुता प्रणीतनिर्मलोदका
प्रसिद्धरङ्गनायका प्रकाश्यते प्रियङ्गता॥ ११७

*शिङ्गिरिकोण्डस्थलम्।*

कण्ठीरवाद्रौ कमलासमेतः
काम्यार्थदः कल्पतरुर्यथा नृणाम्।
कलौ नृसिंहः कमलासनेड्यः
करोति सौख्यं कमलाश्रितानाम्॥ ११८

*मङ्गलगिरिमाहात्म्यमाह।*

मङ्गलगिरिनिलयस्थं
मादृशपथिकैर्महर्षिभिर्मान्यम्।
महदास्यकायकान्तिं
मनसा विष्णुं भजामहे सततम्॥ ११९

मन्दरगिरिशिखरोपममहदालयवासी
मदगर्वितदनुजाधिपमधुकैटभहन्ता।
मनुजार्पितगुडमिश्रितपयसा कृततोषो[1]
मम चेतसि भगवानिह कृपया सुखमास्ते॥ १२०

*अथ भद्राचलाधिष्ठितरामचन्द्रप्रभावं वर्णयति।*

भद्राचलाधिष्ठितरामचन्द्रं
भक्त्या स्तुवन्त्याश्रितवैणिकाः सदा।
पद्यात्मना प्रश्रितवाग्भिरन्ये
नृत्यन्ति केचिद्भुवि तालहस्ताः॥ १२१

---

1. A,B: °ताषान्

*कृष्णानदीप्रभावमाह।*

कृष्णवेणीनदी सर्वदा पावना
तज्जले मज्जतां ज्ञानमोक्षप्रदा।
सागरेणादृता सर्वसौख्यप्रदा
सन्ततं भूतले मादृशान् रक्षति॥ १२२

*अथ गोदावरीप्रभावमाह।*

गोदावरी भीमनदी मलापहा
निरन्तरागाधजलप्लवैर्युता।
समुद्रवत् सर्वजनाभिभूषिता
सा सर्वदा विष्णुपदीव मोक्षदा॥ १२३

*श्रीकाकुलप्रभावमाह।*

श्रीकाकुलेशः श्रितपारिजातः
श्रमापनोदं कुरुतेऽध्वगानाम्।
श्रिया समेतः शरणागतानां
श्रेयांसि कुर्वन्नधुना प्रसिद्धः॥ १२४

*अथ सिंहाचलप्रभावं वर्णयति।*

सिंहाचलं श्रीशकृपाकटाक्षात्
सेव्यं मुनीन्द्रैः श्रयतां शरण्यम्।
शश्वत् प्रसिद्धं शततीर्थयोगा-
च्छ्रमापनोदं मनसा स्मरामि॥ १२५

नृसिंहरूपी भगवानमुष्मिन्
क्षेत्रे पुरा चन्दनचर्चिताङ्गः।
ब्रह्मेन्द्ररुद्रादिमहर्षिसंघैः
संस्तूयमानः सततं प्रकाशते॥ १२६

*श्रीकूर्मस्थलमाहात्म्यमाह।*

श्रीकूर्मरूपी भगवानमुष्मिन्
क्षेत्रे पुरा शंकररूपधारी।
रामानुजाचार्यमतानुसारा-
दद्यापि पूजां लभते मुरारिः॥ १२७

*अथ श्रीजगन्नाथक्षेत्रप्रभावमाह।*

जगन्नाथे विष्णुर्जगति बहुधा संश्रितजनान्
पवित्रीकुर्वन्नप्यनभिमतरामानुजगुरोः।
सपर्यां नादृत्वा हरिदिवसमुत्कृष्टमपि तं
निबध्यास्मिन् क्षेत्रे निवसति चिराद्योगिसहितः॥ १२८

*कपीरुदास इति कस्यचिद्भगवद्भक्तस्य[1] वृत्तान्तं कथयति।*

कपीरुदासः कतिचिन्मुरारेः[2]
चक्रं विमाने प्रणमन् प्रहृष्टः।

---

1. A.B.: कश्चिद्भगद्भ°

2. Ungrammatical usage for कश्चिन्मु°

श्रीरङ्गनाथस्य वचो निदानात्
क्षेमास्पदं मोक्षमवाप शीघ्रम्॥ १२९

*अथ गङ्गानदीप्रभावं वर्णयति।*

भागीरथी पुण्यनदी सुरालयात्
प्राक्छम्भुना भूमितले प्रतिष्ठिता।
वैकुण्ठपादाश्रयणात् सुपावना
पुनाति लोकानधुनापि मज्जतः॥ १३०

स्वर्गस्थितानां च सुरासुराणां
भूलोकजानां भुवि तापसानाम्।
पाताललोकस्थितसागराणां
मोक्षं ददात्यत्र च नामभेदात्॥ १३१

मन्दाकिनीत्येव दिविस्थितानां
गङ्गेति भूलोकनिवासिनां च।
रसातले भोगवतीति पुण्या
मुक्तिप्रदा भाति नृणां त्रिलोक्याम्॥ १३२

*कण्डमेन्नुंकडिनकर्। प्रयागै।*

कण्डमेन्नुंकडिक्षेत्रवासं पुरा
कुर्वतः पूरुषस्योत्तमस्यासकृत्।
विष्णुपद्यास्तटे दर्शनं कुर्वतां
ज्ञानिनां सर्वदा मुक्तिरासीद्ध्रुवम्॥ १३३

भारद्वाजऋषेः प्रमोदममितं कर्तुं पुरा पूरुषः
श्रेष्ठः प्रादुरभून्महर्षिसहिते गङ्गोत्तरे रोधसि।
अद्याप्यत्र महर्षयः सुरगणाः स्नात्वापि गङ्गाजले
नित्यं तत्तटवासिनं मुरहरिं सेवन्ति मोक्षार्थिनः॥ १३४

मङ्गलनामविमाने
महोत्पलवल्याश्च दर्शनं विष्णोः।
मङ्गलतीर्थस्नानं
महीपतीनां च दुर्लभं भूम्याम्॥ १३५

*अयोध्यानगरप्रभावं वर्णयति। तिरुवयोध्यै।*

कौसल्यायां जनित्वा दशरथतनयः द्वादशाब्दे सुविद्यां
विश्वामित्रात् प्रगृह्णन् क्रतुषु सुमनसां तृप्तिमुत्पाद्य शक्त्या।
यागारम्भे समन्तात् सवनहुतभुजिं शोणितैः सिंचतस्तान्
क्रव्यादान् मर्दयित्वा स्मरहरधनुषच्छेदनाद्वल्लभोऽभूत्॥ १३६

सीतां विवाह्याध्वनि रामभङ्गं
कृत्वा स्वपित्रादिभिरर्चितः सन्।
पुरीमवाप्य स्वगृहे सभार्यः
स्वमातृभिः सौख्यमवाप रामः॥ १३७

राजा स्वराज्यं स्वसुते निवेशितुं
यदा प्रयत्नं कुरुते नृपात्मजः।
पट्टाभिषेकोत्सवसंभ्रमोपमं
विमातुरादेशवरं समग्रहीत्॥ १३८

कैकेयीवचनं तदा रघुपतिः श्रुत्वा सभार्यो व्रती
गत्वारण्यमभीः महर्षिनिवहं नत्वा तदाशीर्बलात्।
सुग्रीवप्रमुखैः समेत्य जलधौ सेतुं च कृत्वा पुरीं
तन्मार्गेण विविश्य राक्षसगणान् हत्वा प्रियामग्रहीत्॥ १३९

सीतासमेतः श्रितकल्पवृक्षः
श्रीरामचन्द्रः श्रितवानरैः समम्।
श्रमापनोदं श्रितगन्धपुष्पकं
विमानमारुह्य पुरीमगच्छत्॥ १४०

वसिष्ठमुख्यैर्वरभद्रपीठे
रामोऽभिषिक्तो रमया समेतः।
पश्चादृषिभ्यो भरतादिभिः समं
राज्यं प्रशास्यन् स्वकथामशुश्रुवत्॥ १४१

साकेतपुरनिवासी
सरयूसरितस्तटेऽश्वमेधान् प्राक्।
शतशः श्रीमान् कृत्वा
मुक्तिं व्यतनोदशेषजन्तूनाम्॥ १४२

*उत्तरमथुरापुरीप्रभावमाह। वडमधुरे।*

उत्तरमथुरापुर्या-
माविर्भूत्वा निगूहितः कृष्णः।
पित्रोः प्रीतिं कुरुते
नन्दयशोदाभिमानपुत्रः सन्॥ १४३

*गोकुलप्रभावमाह। तिरुवाय्प्पाडि।*

गोकुलेऽत्र नवमोहनकृष्णः
गोपबालनिवहैर्विनुतः सन्।
गोपवेषमनुकृत्य विलासा-
द्गोसहस्रमनुगच्छति नित्यम्॥ १४४

सकृद्गोपबालस्तटे यामुनाया-
स्तरोरग्रदेशे स्थितिं चारचय्य।
पटानां सहस्रं गृहीत्वा वधूनां
स्वयं निर्मलः सन् मनांस्याचकर्ष॥ १४५

*अथ बृन्दावनप्रभावं वर्णयति।*

बृन्दारण्ये चैकदा वेणुगानं
श्रुत्वा रात्रौ कामिनीनां सहस्रम्।
गत्वारण्यं बालकृष्णेन साकं
रासक्रीडामाचरच्चन्द्रिकायाम्॥ १४६

बृन्दावनप्रान्तगतान् सवत्सान्
बालान् समादाय सुमेरुकन्दरे।
निधाय वेधाः स्वपुरं प्रवेष्टु-
मशक्तिमान् कृष्णनिदेशकारणात्॥ १४७

विमोहकं कृष्णविलासमात्मभू-
र्दृष्ट्वाप्यशेषेण समागतस्य।
विष्णोः स्वरूपं परतत्त्वमादरात्
स्तुत्वा कटाक्षादविशत्[1] स्वलोकम्॥ १४८

1. A,B: °विश

*अथ गोवर्धनप्रभावमाह।*

नन्दगोपः पुरा गोकुले चैकदा
शक्रपूजाविधिं कर्तुमैच्छद्यदा।
तद्विधिं चान्यथा गोपमुख्या इमे
कारयन्तो यदि क्षेममेषां भवेत्॥ १४९

इतीरितां वाचममुष्य सूनोः
श्रुत्वाथ गोपाः स्वजनैः समं गताः।
गोवर्धनं प्राप्य बलिं च कृत्वा
गोवर्धनात् क्षेमवचांस्यशृण्वन्॥ १५०

पुरन्दरः क्रोधवशात् समेत्य
मेघान् विवश्याशु ववर्ष तेषु।
गोवर्धनं स्वाङ्गुलिमाधिरोप्य
जुगोप तान् सप्तदिनानि कृष्णः॥ १५१

गोगोपगोपीजनशोकनिघ्नं
गोवर्धनोद्धारणहेतुना च।
गोविन्दनाम्ना कलिताभिषेकं
गोपालकृष्णं शतमन्युरस्तुवत्॥ १५२

*द्वारकाप्रभावं वर्णयति।*

प्राग्द्वारकानाम पुरीं समुद्रे
प्रकल्प्य नारायणनाम कृष्णः।
श्रीहेमकूटाख्यविमानमध्ये
विभाति लक्ष्म्या सह योगिबृन्दैः॥ १५३

अष्टाभिर्महिषीभिरन्वितवपुः श्रीदेवकीनन्दनः
द्रौपद्याश्च पटं दिशन् परिभवे श्रीहस्तिनापट्टणे।
दुर्योधादिषु दुर्जनेषु बहुधा न्यायं निरूप्यासकृत्
कारुण्याद्युधि पाण्डवा ------ समं रक्षति॥ १५४

श्रीयादवानां पतिरम्बुजाक्षः
श्रीसत्यभामासहितोऽपि शौरिः।
श्रीरुक्मिणीं पार्श्वगतां च राधां
संप्राप्य हर्षं कुरुतेऽङ्गनानाम्॥ १५५

*अथ सालग्रामक्षेत्रप्रभावं वर्णयति।*

सालग्रामशिलास्थलं स्वयमभूत् पूर्वोद्भवा गण्डकी
श्रीवैकुण्ठपतिः शिलास्वपि तयोः चक्रात्मना प्राविशन्।
आकाशाख्यविमानमद्भुततरं प्राविश्य तीर्थान्तिके
प्रायश्चाङ्गिरसस्य दृग्विषयतां प्राप्नोति लक्ष्म्या सह॥ १५६

*उत्तरश्रीवैकुण्ठनगरप्रभावमाह।*

परमपुरुषः प्रीत्या गौरीं रक्षन् सुमहावने
परमऋषिभिः साकं स्नात्वा नद्यां सुतपस्विनीम्।
परिमलवतीं लक्ष्मीं प्राप्य प्रहृष्टमनाश्चिरं
परमकृपया पान्थान् रक्षन् करोति सुखं नृणाम्॥ १५७

*अथ नैमिशारण्यक्षेत्रप्रभावं वर्णयति।*

नैमिशारण्यभूर्नन्दसून्वाश्रिता
नारदाद्यैः समं नन्दयन्ती बभौ।
देवराजः स्वयं दिव्यतीर्थान्तिके
हारीलक्ष्म्या सह प्रादुरासीद्धरिः॥ १५८

*अथ पुष्करक्षेत्रमाहात्म्यं वर्णयति।*

पुष्करसदृशक्षेत्र-
मुर्व्यां नाभूद्वृषाचलादन्यत्।
पुण्यसरोवरमहिमा
नदीशतानां न चास्ति सिन्धूनाम्॥ १५९

*क्षीराब्धिप्रभावमाह। तिरुप्पार्कडल्।*

परमपुरुषः पारावारं परीत्य महावने
परमकृपया श्रीभूनीलाद्यशेषसुरर्षिभिः।
परकृतजगद्व्यापारेषु प्रविश्य विशेषतः
परिकरजनान् रक्षन् पापाद्विमुच्य विराजते॥ १६०

*अथ हरिद्वारप्रभावमाह।*

हरिद्वारं प्राप्य प्रयतमनसाः प्राकृतजनाः
शरीराण्युत्सृज्य श्रमविषयभूतान् हितधिया ।
चिरात् प्राप्तुं मोक्षं शमगुणवशाच्छ्रीशकृपया
भजन्ते योगीन्द्रास्तमपि सहसा यान्ति बहवः॥ १६१

*बदरिकाश्रमप्रभावं वर्णयति।*

इदं बदरिकाश्रमस्थलमुपेत्य नारायणः
करोति यमिनां सुखं नरवरेण साकं चिरात्।
पितामहमुखादयः प्रकटितस्वरूपं तयो-
र्नमन्ति शतशोऽधुना नरवराः सकृत् संगताः॥ १६२

ये मानवास्तप्तसुवर्णकुण्डे
स्नात्वा तयोर्दर्शनमाचरन्तः।
ते योगमार्गं सततं प्रकाश्य
देहावसानेऽमृतमाप्नुवन्ति॥ १६३

*अथ मानससरः प्रभावमाह।*

मानससरस्तीरे
महोत्पलगन्धान् मरालनिर्घोषान्।
मधुकरनिनदान् श्रुत्वा
मन्मथजनकश्चचार महिषीभिः॥ १६४

*अथ श्रीशैलप्रभावमाह।*

शेषाद्रेः पुच्छदेशे शतमघविनुते श्रीनिवासाज्ञया प्राक्
श्रीशैलं प्राप्य हृष्टः श्रयणसुखकरं शश्वदद्वैतिनॄणाम्।
शम्भुः श्रीपार्वतीशः प्रमथगणयुतः प्राकृतान् रक्षितुं प्राग्-
विज्ञानं मादृशानां वितरतु सततं वेङ्कटाद्रिस्थितानाम्॥ १६५

*अथ वेङ्कटगिरिप्रभावं वर्णयति।*

वेङ्कटाख्ये गिरौ राजधान्यां प्रभु-
र्मन्त्रिभिः पण्डितैर्मानितः सर्वदा।
मध्यरङ्गस्थले मङ्गलालंकृते
माधवं शंकरं पूजयन् राजते॥ १६६

*किं च।*

पूर्णकामो नृपः पूर्वभूपाधिकैः
पुत्रपौत्रादिभिः पूजितः सर्वदा।
पुण्यकार्याण्ययं पूर्णमायुर्धनं
पूर्णदृष्ट्या हरेः पूरयेदञ्जसा॥ १६७

*मन्नारपोलूरु।*

मन्नारपोलूरिति माधवस्य
निकेतनं योगिभिरादृतं पुरा।
श्रीवेङ्कटाद्रीश्वरपालनाच्च
नमाम्यहं दाशरथिं हरिं सदा॥ १६८

*अथ नागलापुरक्षेत्रप्रभावं वर्णयति।*

श्रीवत्सगोत्रोद्भववादिभीकरै-
राचार्यवर्यैः कलितोत्सवं हरेः।
अङ्गीकरोत्याश्रितवत्सलत्वा-
दखण्डनद्याश्रितनागलापुरे॥ १६९

*अपि च।*

रामगिर्याश्रमाभ्यर्णदिव्यस्थलं
रम्यवृक्षैर्युतं राजते नित्यशः।
रायभूपैः कृतं रम्यशालावृतं[1]
रङ्गसदृशं महद्गोपुरालङ्कृतम्॥ १७०

*अन्यच्च।*

वेदनारायणः स्वस्य पादादितः
फाल्गुने मासि तत्सूर्यपूजाविधेः।
दर्शनं कुर्वतां तत्फलं मादृशां
संदधात्यन्वहं सर्वसौख्यं सदा॥ १७१

*अथ श्रीकालहस्तिप्रभावमाह।*

हेमाद्रेः प्राक्प्रदेशे नरपतिनगरे स्वर्णनद्यास्तटे प्राग्
गौरीशः प्रादुरासीत् प्रकटितविभवः श्रीनिवासोन्मुखः सन्।
बौद्धान् जित्वा स्वशतॄन् जगति यतिपतिः गोपुरं कीर्तिरूपं
स्थापित्वा[2] सर्वदेशेष्वयमधिकयशाः राजते वेङ्कटाद्रौ॥ १७२

*श्रीवेङ्कटाद्रावधःस्थितश्रीपुर्यां श्रीमन्नाथमुनेर्भक्त्यतिशयमाह।*

श्रीशैलोपत्यकायां विलसितनगरे वासमासाद्य भक्त्या
गोदां गोविन्दराजं रघुपतिमुपरि श्रीनिवासं प्रणम्य।
तालं हस्ते गृहीत्वा मुनिवरकथितान् द्राविडान् वेदसारान्
पूजाकाले पठित्वा श्रवणसुखकरं गायते नाथयोगी॥ १७३

---

1. A,B: रम्यसाला°

1. for स्थापयित्वा

*॥इति श्रीवेङ्कटाद्रौ श्रीवेङ्कटेश्वरमाहात्म्य-
प्रतिपादककैङ्कर्यरत्नावलिग्रन्थे श्रीरङ्गादि-
दिव्यस्थलपुण्यनदीप्रभावकथनं नाम
षष्ठोऽध्यायः॥*[1]

1. The author continues after the colophon as follows:

श्रीनिवासपरब्रह्मणे नमः।
अस्मद्गुरुपरम्परायै नमः।
श्रीमते रामानुजाय नमः।

देवी[1]दृग्विषशैलनाथकरुणासन्दोहदुग्धाम्बुधे[2]–
र्भूत्वाप्याश्रितसंचितार्थविततिर्लक्ष्मीपतेः[3] सेवया।
तस्याः[4] प्राकृतपद्यकिङ्करकथामाध्वीं वहन्तो[5] दिश–
न्त्वध्यायस्तबका गुणाः सुमनसां श्रोत्रेषु भूषाश्रियम्॥ १७४

1. This verse occurs thrice in this book as 1.155; 4.168 and 6.174 with variants; 1.155, 4. 168: देव–
2. 1.115; 4.168: दृवृष⁰; 6.174: दृर्वृष⁰
3. 4.168: भूत्वा स्वाश्रितकल्पितार्थ⁰
4. तस्या in all places
5. 6.174: वशून्तो



Aerial view of the Veṅkaṭeśvara temple at Tirumala

# श्रीनिवासमङ्गलम्

*सर्वेषां द्रष्टृश्रोतॄणां समस्तमङ्गलावाप्त्यर्थं श्रीनिवासस्वामिनः मङ्गलान्युच्यन्ते।*

नङ्गलं वेङ्कटेशाय महतां दिव्यचक्षुषे।
ादृशान् रक्षितुं मह्यामाविर्भूताय मङ्गलम्॥ १

ीशैलशिखरस्थाय श्रीमतेऽनन्तशक्तये।
ीशेषगिरिवासाय श्रीनिवासाय मङ्गलम्॥ २

ीपराङ्कुशयोगीन्द्रचित्तपङ्कजवासिने।
ीरामानुजसिद्धान्तस्थापकायास्तु मङ्गलम्॥ ३

ानन्तकोटिब्रह्माण्डधारिणेऽनन्तमूर्तये।
ाभयप्रदमन्त्रेशवाच्यरूपाय मङ्गलम्॥ ४

ब्धिकन्यापरिष्वक्तवक्षसाश्लिष्टवाससे।
ानन्दनिलयान्तस्थहंसतल्पाय मङ्गलम्॥ ५

ङ्खचक्रगदाखड्गशार्ङ्गकौस्तुभधारिणे।
शिमार्ताण्डनेत्राय शान्तरूपाय मङ्गलम्॥ ६

ङ्कराजन्यनेत्राब्जविषयाय महात्मने।
तवातातपहिमवर्षासक्ताय मङ्गलम्॥ ७

शातकुम्भकृतस्तम्भदीपाभ्यां शोभिताङ्घ्रये।
शम्भुना दत्तभूषाय शंकरायास्तु मङ्गलम्॥ ८

विभूतिद्वयनाथाय विश्वमङ्गलकारिणे।
विशेषवस्त्रभूषाय विश्वरूपाय मङ्गलम्॥ ९

विश्वत्राणधुरीणाय वृषभाचलवासिने।
विनतासुतवाहाय वेदवेद्याय मङ्गलम्॥ १०

वेङ्कटाचलविख्यातवैकुण्ठाद्रिविहारिणे।
वराहाचलनाथाय वासुदेवाय मङ्गलम्॥ ११

सर्वावतारशान्ताय साधुसंपत्प्रदायिने।
सच्चिदानन्दरूपाय संस्तुतायास्तु मङ्गलम्॥ १२

सनकादिमहायोगिसद्भिरादृतसंपदे।
सर्वलोकशरण्याय सत्यसन्धाय मङ्गलम्॥ १३

सप्तर्षीणां प्रसन्नाय सर्वाभीष्टप्रदायिने।
सहस्रनामसंपूर्णसत्वहाराय मङ्गलम्॥ १४

सालग्रामशिलायुक्तहारेणामिततेजसे।
सामगानविलोलाय सच्चरित्राय मङ्गलम्॥ १५

स्वामिपुष्करिणीतीरवासिने[1] परमात्मने।
स्वतःप्रकाशितार्थाय स्वान्तरङ्गाय मङ्गलम्॥ १६

---

1. B: °ष्करणी°

स्वकीयरूपलावण्यगाम्भीर्यगुणसिन्धवे।
स्वर्णपीताम्बरोपेतशुद्धसत्त्वाय मङ्गलम्॥ १७

सिंहाचलनिवासाय सिद्धश्रीपादरेणवे।
सिद्धविद्याधराणां च सिद्धिदायास्तु मङ्गलम्॥ १८

पञ्चाननादिदेवानां परमार्थप्रदायिने।
पङ्कजासनसंसेव्यपादपद्माय मङ्गलम्॥ १९

मल्लिकापुष्पतुलसीमालालङ्कृतवक्षसे।
मशकीकृतदैत्याय महाधीराय मङ्गलम्॥ २०

पार्वतीज्येष्ठतनयकृतपूजानुमोदिने।
पर्वते मृगयारूढतरङ्गायास्तु मङ्गलम्॥ २१

नवरत्नैर्विधिकृतचूडामकुटधारिणे।
नवीनकृतभूषाय नारसिंहाय मङ्गलम्॥ २२

नारायणनगेशाय नन्दिताखिलयोगिने।
नाथयोगिप्रसन्नाय नलिनाक्षाय मङ्गलम्॥ २३

ब्रह्मेन्द्रादिकृतोद्धर्षमहिम्नाद्भुतकीर्तये।
बृहत्सौधविमानाय बृहद्घण्टाय मङ्गलम्॥ २४

महामण्डलभूयिष्ठमनुजाभीष्टदायिने।
महन्त्वाख्यमहायोगिकृतकार्याय मङ्गलम्॥ २५

गरुडाचलनाथाय गतये हितकाङ्क्षिणाम्।
गन्धर्वोदितगीर्वाणगानलोलाय मङ्गलम्॥ २६

कल्याणगुणसंपूर्णकमलागृहमेधिने।
कनकाद्रिनिवासाय कामितार्थाय मङ्गलम्॥ २७

श्रीनिवासस्य सिद्धान्तिपरवस्त्वभिधाजुषा।
कृष्णेन कथितं विष्णोः मङ्गलं भवतु प्रियम्॥ २८

नक्षत्रसंख्यया प्रोक्तं नलिनाक्षस्य मङ्गलम्।
नीराजनस्य समये नित्यं कुर्वन्तु वैष्णवाः॥ २९

*एतद्ग्रन्थकर्तृवक्तृश्रोतृणां फलमाह —*

स्थलेष्विह हरेः कथाश्रवणतः फलं सौख्यदं
समस्तऋषिसंमतं सकलयोगिभिः प्रार्थितम्।
सदा विधिशिवामरैः सकलभूमिपालैः समं
सभासद इमे नराः भजत मुक्तिसंपादकम्॥

कृपारससमुद्भवं भगवतां प्रभावान्वितं
विशेषमिह श्रुण्वतां भवति सर्वसौख्यं सदा ।
कदाचिदपि यः पुमान् पठति चेत्तदानुग्रहं
लिखेद्यपि च भक्तितः सुखमुपैति देवार्थितम् ॥



The Puṣkariṇī at Tirumala, p.19, 38, 149